अथ

# अभिज्ञानशाकुन्तलम् ।

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु व स्ताभिरष्टाभिरीशः ॥ १ ॥

---

यदङ्घ्रिभजनात्पुरासमभवन्सुधामाधुरी-
धुरीणकविताजुष स्सपदिकालिदासादयः ।
विधेः प्रमदमादधत्कुमुदकाशतुल्यद्युति
च्युतेतरसुरस्मृतेर्मनसिमेतदास्तां महः ॥ १ ॥

सर्वाभिनन्द्यमहिमा कालिदासोमहाकविः ।
नाटकं यदभिज्ञानशाकुन्तलमरीरचत् ॥ २ ॥

तस्य रूपकरत्नस्य व्याख्या विद्वन्मनोरमा ।
क्रियते शङ्कराख्येन विरिञ्चिपुरवासिना ॥ ३ ॥

अथ तत्रभवान् सकलकविकुलतिलकः कालिदासनामा महाकविर्नाटकं चिकीर्षुस्तस्याविघ्नपरिसमाप्तये ग्रन्थादौ नान्दीरूपामाशिषं प्रयुङ्क्ते—**या सृष्टिरिति** ॥ या तनुः स्रष्टुर्जगत्सिसृक्षोरीश्वरस्य आदौ भवा आद्या प्रथमा सर्जनं सृष्टिः । अनेन जलमयी तनुरुक्ता । यथाह मनुः—"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत्" इति । या तनुः विधिना शास्त्रोक्तविधानेन हुतं अभिमतदेवतोद्देशेन प्रक्षिप्तं हविः पुरोडाशादिकं हवनीयद्रव्यजातं वहति दधाति । देवतार्थमिति शेषः । "देवेभ्यो हव्यं वहति" इति श्रुतेः । अनेनाग्निमयी तनुरुक्ता । या तनुः होत्री हवनकर्मसम्पादयित्री । अनेनयजमानरूपा तनुरुक्ता । येद्वेतनू कालं सौरचान्द्रमसरूपं विधत्तः विवेचयतः । अनेन दिवाकरनिशाकरमय्यौ तनू उक्ते । या तनुः श्रुतेः श्रवणेन्द्रियस्य विषयः ग्राह्यः गुणः शब्दरूपः यस्याः सा तथोक्ता सती विश्वं जगत् व्याप्य आवृत्य स्थिता । अनेनाका-

शमयी तनुरुक्ता । यां तनुं सर्वेषां भूतानां प्रकृतिः आधारभूता इत्याहुः निर्दिशन्ति । शास्त्रविद इति शेषः । अनेन पृथिवीमयी तनुरुक्ता । प्रकृतेः कर्मत्वेऽपि निपातेनेतिशब्देनाभिहितत्वात् न द्वितीया । यया तन्वा प्राणिनः शरीरिणः प्राणवन्तः प्राणसहिताः प्राणधारणक्षमा इति यावत् । प्राणापानादिव्यपारेण वायोरेव शरीरधारकत्वादिति भावः । अनेन वायुमयी तनुरुक्ता । ताभिः यच्छब्देन या निर्दिष्टास्ताभिरित्यर्थः । प्रत्यक्षाभिः इन्द्रियगोचराभिः अष्टाभिस्तनुभिः प्रपन्न उपलक्षितः भवरुद्रादिभेदेन तत्तन्मूर्तिधर इति यावत् । ईशः शिवः वः युष्मान् अवतु सकलाभिलषितफलवितरणेन रक्षतु । यतः परमेश्वरश्चेतनाचेतनं सर्वमन्तः प्रविश्य व्यापारयति अतः पृथिव्यादीनां तत्तनुत्वव्यपदेशः । अनेन "सर्वं खल्विदं ब्रह्म" इतिश्रुत्यर्थः प्रतिपादितो भवति । अत्र जलाद्यष्टमूर्तीनामेकैकस्यापि परार्थैकफलत्वात् तादृशतनुविशिष्टस्य भगवतो रक्षणक्रियासामर्थ्यं सूचितं कविनेत्यनुसन्धेयम् । अत्र "काव्यार्थसूचनं कैश्चिन्नान्दयामेव निरूप्यते" इति वचनात्काव्यार्थोऽपि किञ्चिद्द्योत्यते । या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता । एतावत्पर्यन्तं तादृशसृष्टेरभावादाद्येत्युक्तिः । तथा च मेघदूते—"या तत्रास्ते युवतिविषये सृष्टिराद्येव धातुः" इति । अथवा स्रष्टुर्विश्वामित्रस्य—"अन्यमिन्द्रं करिष्यामि" इति तस्यापि स्रष्टृत्वात् । वहति विधिहुतं या हविरित्यनेन गान्धर्वविधिना परिणीतायाः शकुन्तलाया दुष्यन्तनिहितगर्भधारणं सूच्यते । अष्टाभिस्तनुभिः प्रपन्न इत्यनेन दिक्पालांशसंभवो राजा सूच्यते । अष्टमूर्तीनां साक्षाद्वाचकशब्दैर्विनागुणक्रियादिद्वाराकथनात्पर्यायोक्तमलङ्कारः । रक्षणक्रियां प्रतितनुविशिष्टस्य हेतुत्वेनोपादानात्काव्यलिङ्गमलङ्कारः । अष्टमूर्तित्वलक्षणासाधारणस्वरूपवर्णनात्स्वभावोक्तिरलङ्कारश्च । स्रग्धरा वृत्तम् ॥ ये द्वे कालं विधत्त इत्यत्र केचित्कालमहोरात्रलक्षणमाहुः । तन्न । अहोरात्रादिविभागस्य भानुगत्यधीनत्वात् । यथाह मनुः—"अहोरात्रे विभजते सूर्यो मानुषदैविके" इति । प्रतिपदादितिथिव्यवहारस्य निजकलाक्षयवृद्धिपूर्वकचन्द्रगत्यधीनत्वाच्च, तस्मात्सौरचान्द्रलक्षणं कालमित्येव कल्पनं समीचीनम् । तथा या सृष्टिरित्यत्र सर्जनं सृष्टिरिति भावक्तिन्नन्तेन सृष्टिशब्देन सृष्टिसृष्टयोरभेदोपचारात्सृष्टं वस्तु जलं प्रतिपाद्यते । "सृज्यत इति कर्मक्तिन्नन्तेन सृष्टं वस्त्वभिधीयते" इति केचित् । अत्र पक्षे तु आद्येति सृष्टिरित्यस्य विशेषणम् । तथाच या तनुः स्रष्टुर्ब्रह्मणः आद्या सृष्टिः प्राथमिकं सृष्टं वस्तु । जलरूपमिति यावदित्यर्थः सङ्गच्छते । भावे विहितस्य क्तिनः कर्मणि प्रवृत्तिस्तु अगतिकगतिकक्लिष्टकल्पनसाध्या । तस्मात्सृष्टिशब्दस्य यथाश्रुतमेव भावक्तिन्नन्तत्वमङ्गीकृत्य सृष्टिसृष्टयोरभेदोपचाराद्गुणद्वारा गुणिप्रत्यायनाद्वा जलपरत्वकल्पनमेव साधु । प्रयुक्तं च कालिदासेनैव मेघसन्देशे—"तन्वी श्यामा शिख

(नान्यन्ते)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य ।) आर्ये, यदि नेपथ्यविधानमवसितम्, इतस्तावदागम्यताम् ।

**नटी**—अज्ज, इयं ह्मि ।

**सूत्रधारः**—आर्ये, अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुनाभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

---

१. आर्य, इयमस्मि ।

---

रिदशना पक्वबिम्बाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः । श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां या तत्रास्ते युवतिविषये सृष्टिराद्येव धातुः ॥" इति । अत्र च या यक्षपत्नी तन्वी श्यामेत्यादिलक्षणलक्षिता सा युवतिविषये धातुराद्या सृष्टिर्निर्माणमिवेत्यर्थो लभ्यते । अत्रापि निर्माणनिर्मितयोरभेदोपचाराद्गुणद्वारा गुणिप्रत्यायनाद्वा करणीयोपपत्तिः । कर्मक्तिन्नन्तत्वाङ्गीकारेतु नैतत्सहृदयानां हृद्यम् । अतो भावक्तिन्नन्तत्वमेवाङ्गीकृत्य सृष्टिस्रष्टयोरभेदोपचारस्य वा गुणद्वारा गुणिप्रत्यायनस्य वाश्रयणमेव न्याय्यमित्यलं विस्तरेण ॥ १ ॥

**नान्द्यन्त इति**॥ नान्द्याः अन्ते अवसाने नान्द्यां समाप्तायामित्यर्थः । सूत्रधारः प्रविश्यवदतीति शेषः अथ प्रस्तावनां विवक्षुस्तदङ्गभूतां प्ररोचनां प्रस्तौति आर्य इत्यादिना ॥ आर्य इति सूत्रधारेणनट्या आमन्त्रणप्रकारः । तदुक्तम् "वाच्यौ नटी सूत्रधारावार्यनाम्ना परस्परम्" इति । नेपथ्यं भूषाङ्गरचनादिः तस्य विधानं करणं अवसितं यदि समाप्तं चेत् । अभिरूपाः विद्वांसः तैर्भूयिष्ठा प्रचुरा अनेनसभाप्रशंसाकृता ॥ अद्य वक्ष्यमाणग्रीष्मसमये खलुर्वाक्यालङ्कारे । कालिदासग्रथितवस्तुना कालिदासेन कविना ग्रथितं निबद्धं वस्तु कथाशरीरं यस्य तेन अभिज्ञायतेनेनेत्यभिज्ञानं केनचित्कारणेन तिरोहितायाः स्मृतेः प्रत्युपस्थापकं चिह्नं प्रकृते अङ्गुलीयकं शकुन्तलामधिकृत्य कृतं शाकुन्तलं अभिज्ञानप्रधानं शाकुन्तलमिति शाकपार्थिवादित्वात्समासः तदिति नामधेयं यस्यतेन नवेन अपूर्वेण नाटकेन "वीरशृङ्गारयोरेकःप्रधानं यत्रवर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम्" इत्युक्तलक्षणेन रूपकविशेषेण अस्माभिः उपस्थातव्यम् आराधयितव्यम् एतन्नाटकाभिनयेन सामाजिकमनांस्यनुरञ्जयाम इति भावः । तत् तस्मात् सभाया अभिरूपभूयिष्ठत्वादित्यर्थः प्रतिपात्रं पात्रे पात्रे "अव्ययं विभक्ती" त्यादिनावीप्सायामव्ययी-

**नटी**—[१]सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्यदि ।

**सूत्राधारः**—आर्ये, कथयामि ते भूतार्थम् ।

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

**नटी**—[२]अज्ज, एवं णेदम् । अणन्तरकरणिज्जं अज्जो आणवेदु ।

**सूत्रधारः**—किमन्यदस्याः परिषदःश्रुतिप्रसादनतः । तदिममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् । संप्रति हि

---

१. सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते ।
२. आर्य, एवमेतत् । अनन्तरकरणीयमार्य आज्ञापयतु ।

---

भावः सर्वेष्वपिपात्रेष्विलर्थः अत्रकालिदास इति कवेः तद्ग्रथितवस्तुत्वकथनेन काव्यस्य च प्रशंसा कृता । एषा प्ररोचना । तदुक्तं "निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः । कविकाव्यनटादीनां प्रशंसाचप्ररोचना ।" इति । सुविहितः सुशिक्षितः प्रयोगः अभिनयक्रियायेन तस्यभावस्तया किमपि न परिहास्यते परिहीनं न भविष्यति ।

आपरितोषादिति ॥ विदुषां पण्डितानां आपरितोषात् परितोषं मर्यादीकृत्य पदद्वयं चैतत् । यावत्परितोषो भवति तावदित्यर्थः । "आङ्मर्यादावचने" इति कर्मप्रवचनीयत्वे "पञ्चम्यपाङ्परिभिः" इति पञ्चमी । प्रयोगे अभिनयविषये विज्ञानं नैपुण्यं आत्मन इति शेषः । साधु सम्यक् न मन्ये विद्वत्सम्मत्यवधि साधोरपि प्रयोगस्य साधुत्वं न निश्चीयत इत्यर्थः । तदेवाह बलवदित्यादिना । बलवत् दृढं । सम्यगिति यावत् । शिक्षितानामपि अभ्यस्तविद्यानामपि । शास्त्रार्थतत्त्वविदामपीति भावः । चेतः मनः आत्मनि स्वविषये । चेतसीत्यर्थः । अप्रत्ययं प्रत्ययो विश्वासस्तद्रहितं स्वविद्यावैशद्ये बुधजनसम्मतिं विना विश्वासो न विधेय इत्यभिप्रायः । अर्थान्तरन्न्यासोऽलङ्कारः । आर्या वृत्तम् ॥ २ ॥

अनन्तरकरणीयम् इतःपरं कर्तव्यम् । अथामुखं प्रस्तौति सूत्रधार इत्यादिना । आमुखलक्षणं यथा "सूत्रधारो नटीं ब्रूते मारिषंवाविदूषकं । स्वकार्यप्रस्तुताक्षेपि विचित्रवचनैस्तथा । वीथ्यङ्गैरुचितैर्वापि यत्रेदं प्राहुरामुखम् ।" इयि । श्रुतिप्रसादनतः श्रुतेः श्रवणेन्द्रियस्य प्रसादनतः आनन्दनात् श्रवणप्रीतिसम्पादकात् कर्मणः अचिरप्रवृत्तम् इदानीमेवोपस्थितं उपभोगक्षमम् सुखानुभवार्हम् शीतवातादिसेवनोचितम् ।

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

नटी—तह[1] । (इति गायति ।)

ईसीसिचुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं ।
ओदंसयन्दि दअमाणा पमदाओ सिरीसकुसुमाइं ॥ ४ ॥

---

१. तथा ।
२. ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥

---

ग्रीष्मस्योपभोगक्षमत्वमुपपादयति—**सुभगेति** ॥ सुभगाः सुखकराः सलिलेषु जलेषु अवगाहाः प्रवेशाः येषु दिवसेषु ते तथोक्ताः अनेन यूनां जलक्रीडादी-नामयमभ्यर्हितः समय इति सूच्यते । पाटलायाः कुसुमानि पाटलानि "पुष्पमूलेषु बहुलम्" इति बहुलग्रहणाद्विकारावयवविहितस्याणो लुक् । पाटलपदं तु ग्रीष्मर्तु-पुष्पितवृक्षलतादेरुपलक्षकमिति ज्ञेयं । पाटलानां पाटलपुष्पाणां संसर्गेण सम्बन्धेन सुरभयः सुगन्धयः वनवाताः अरण्यमारुताः येषु ते । अनेन विविधक्रीडापरिश्रा-न्तानां यूनामनायासमलयमारुतस्पर्शाद्व्यजनादिनैरपेक्ष्यं ध्वन्यते । तथा प्रकृष्टाछाया यत्र तत्स्थानं प्रच्छायम् । तत्र सुलभा सुखेन लभ्या निद्रा येषु ते तथोक्ताः । किंच परिणामे अवसाने । सायंकाल इत्यर्थः । रमणीयाः आतपोपशमात्संचारयो-ग्यतया मनोहराः वर्तन्ते इति शेषः । अत्र विशेषणैर्यूनां जलक्रीडादिसौकर्यं, शी-तसुगन्धिवायुसेवनं, रतिश्रमापनोदनार्थं छायासु निद्रा, दिवसावसाने बहिःसंचार-योग्यता चेत्युपभोगप्रकारो दर्शितः । आर्या वृत्तम् ॥ ३ ॥

**तथेति** ॥ यथा नटेन शृङ्गाररसपोषकाः ग्रीष्मर्तुधर्माः प्रतिपादिताः तथा तानेव धर्मानधिकृत्य गायति । ईसीसि इति । प्रकृष्टो मदो रूपसौभाग्यजनितो विकारोयासां ताः प्रमदाः युवतयः तासामेव तथाविधालङ्कारयोग्यत्वात् । दयमानाः सदयाः । कुसुमानां सुकुमारत्वान्मृदुव्यापारा इत्यर्थः । भ्रमरैर्द्विरेफैरीषदीषच्चुम्बितानि यतः कोमलकिञ्जल्काग्राण्यत एवेषदीषच्चुम्बितानीति द्विरुक्तिः शिरीषाणामितरपुष्पविल-क्षणसौकुमार्यादवस्थितिदार्ढ्याभावाच्च भ्रमराः उड्डीयमाना एव चुम्बन्तीति ध्वन्यते । सुकुमाराः नितरां कोमलाः केसराणां किञ्जल्कानां शिखाः अग्राणि येषां तानि शिरीषकुसुमानि अवतंसयन्ति कर्णपूरं कुर्वन्ति । शिरीषाणां कर्णाभरणत्वकथनेन

**सूत्रधारः**—आर्ये, साधु गीतम् । अहो रागबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः । तदिदानीं कतमत्प्रकरणमाश्रित्यैनमाराधयामः ।

**नटी**—णं अज्जमिस्सेहिं पढमं एव्व आणत्तं अहिण्णाणसाउन्दलं णाम अपुव्वं णाडअं पओए अधिकरीअदुत्ति ।

**सूत्रधारः**—आर्ये, सम्यगनुबोधितोऽस्मि । अस्मिन्क्षणे विस्मृतं खलु मया । कुतः ।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ५ ॥

(इति निष्क्रान्तौ ।)

प्रस्तावना ।

---

१. नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति ।

---

केशपाशसम्मर्दनासहिष्णुत्वं ध्वन्यते । अत्र शिरीषपुष्पवर्णनेन तदुद्भवकालो ग्रीष्मो वर्णितः । उद्गाथाजातिः ॥ ४ ॥

अहो इति विस्मये रङ्ग नाट्यसभा रागे गीतसम्बन्धिस्वरविशेषे बद्धा निक्षिप्ता चित्रवृत्तिर्मनोवृत्तिर्यस्यसः अलिखित इव चित्रन्यस्तइव । कतमत्प्रकरणम् अत्र-प्रकरणपदं रूपकविशेषवाच्यपि रूपकसामान्यं बोधयति । किमभिधेयन्नाटकमित्यर्थः एनं रङ्गम् आराधयामः अनुरञ्जयामः । अधिक्रियताम् विषयीक्रियताम् । सम्यक् साधु यथोचितावसरम् अनुबोधितोस्मि स्मारितोस्मि । त्वयेति शेषः । अस्मिन् क्षणे तवगीतश्रवणसमये । विस्मृतेः कारणमाह ।

**तवास्मीति** ॥ अत्यन्तं रंहः वेगो यस्य तेनातिरंहसा अतिवेगगामिना हारिणा आकर्षणशीलेन सजातीयैः सह अरं अत्यर्थं गच्छतीति सारङ्गः । साराणि श्रेष्ठानि अङ्गानि अवयवाः अस्येति वा शकन्ध्वादित्वात्पररूपत्वम् । सारङ्गेण हरिणेन एष राजा दुष्यन्त इव हारिणा चित्ताकर्षणशीलेन तव गीतरागेण गीतसम्बन्धिस्वरविशेषेण प्रसभं हठात् हृतः आकृष्टचित्तवृत्तिः अस्मि नाटकप्रयोगावहितमपि मे मनस्त्वदीयगीतरागमाधुर्येण बलादाकृष्टमित्यर्थः । उपमालंकारः । अनुष्टुप् वृत्तम् । अत्रैषोयमित्यनेनपात्रोपक्षेपहेतुः प्रयोगातिशयो नामामुखाङ्गमुपक्षिप्तम् । तदुक्तम् "एषायेमित्युपक्षेपात्सूत्रधार प्रयोगतः । भवेत्पात्रप्रवेशोयं प्रयोगातिशयोहिसः" इति ॥

## प्रथमोऽङ्कः ।

(ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च ।)

**सूतः**—(राजानं मृगं चावलोक्य ।) आयुष्मन्,

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ ६ ॥

**राजा**—सूत, दूरमसुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभिया भूयसा पूर्वकायम् ।

---

**प्रस्तावनेति** ॥ तल्लक्षणं यथा ।—नटी विदूषकोवापि पारिपार्श्वक एव वा । सूत्रधारेण सहिता स्सल्लापं यत्र कुर्वते । चित्रैर्वाक्यै स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्रविज्ञेयं नाम्नाप्रस्तावनापिसा । इति ।

सशरचापहस्तः शरेण सहितः सशरः तथाविधः चापः हस्ते यस्य सः अधिज्यकार्मुक इत्यर्थः आयुष्मन्निति सूतेनराजामान्त्रणप्रकारः । "अयुष्मन्नितिवाच्यस्तुरथीसूतेनसर्वदा" इति ।

**कृष्णेति** ॥ कृष्णेन सारः शवलः कृष्णसारः । "तृतीया तत्कृतार्थेन गुणवचनेन" इति समासः "कृष्णसारः शिंशिपायां मृगभेदे स्नुहीतरौ" इति हैमः । कृष्णसारे सारङ्गे तथा अधिगता अधिरोपिता ज्या यस्मिन् तत्तथाभूतं कार्मुकं धनुर्यस्य तस्मिन् । आरोपितगुणधनुषीत्यर्थः । त्वयि च चक्षुर्ददत् कर्मणे प्रभवतीति कार्मुकं "कर्मण उकञ्" इत्युकञ् प्रत्ययः । पातयन्नहं मृगमनुसरतीति तं मृगानुसारिणं धृतमृगरूपं यज्ञमनुसरन्तं साक्षात्प्रत्यक्षं पिनाकः तन्नामकं धनुरस्यास्तीति पिनाकी शिवः तं पश्यामीव । कृष्णसारमनुसरन् धृतकार्मुकस्त्वं हरिणरूपिणं यज्ञमनुसरन्धृतपिनाकः शिव इव शोभस इत्यर्थः । पुरा हि भगवान् शिवो दक्षाध्वरे भयेन मृगरूपमाश्रित्य पलायमानं यज्ञं वधार्थमनुससारेति पौराणिकी कथात्रानुसन्धेया । उत्प्रेक्षालङ्कारः ॥ ६ ॥

**ग्रीवेति** ॥ अनुपतति पश्चादागच्छति स्यन्दने रथे ग्रीवायाः कन्धरायाः भङ्गेन विवर्तनेन अभिरामं दर्शनीयं यथा तथा मुहुः अभीक्ष्णं बद्धा अर्पिता दृष्टिश्चक्षुर्येन सः । निक्षिप्तनयन इत्यर्थः । अनेन यदा भूमेर्निम्नोन्नततया रथवेगस्य कुण्ठितत्वाद्रथध्वनिर्न श्रूयते तदा मृगो मुहुर्मुहुः परावृत्य पश्यतीति भावः । तथा शरपत

दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥

तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः ।

सूतः—आयुष्मन्, उद्घातिनी भूमिरिति मया रश्मिसंयमना-द्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

राजा—तेन हि मुच्यन्तामभीशवः ।

सूतः—यदाज्ञापयत्यायुष्मान् । (रथवेगं निरूप्य ।) आयुष्मन्, पश्य पश्य ।

---

नात् भीरुतया बाणपतनत्रासेन भूयसा अधिकेन पश्चार्धेन अपरं च तदर्धं च पश्चार्धम् । "पश्चात्" इति सूत्रेण "अर्धोत्तरपदस्य दिक्पूर्वपदस्यापरशब्दस्य पश्चभावो वक्तव्यः" इत्युक्त्वा "विनापि पूर्वपदेन पश्चभावो वक्तव्यः" इति वार्तिकेन पश्चार्धेति स्पष्टम् देहस्यापरभागस्तेन पूर्वकायं पूर्वः कायस्य पूर्वकायः "पूर्वापराधर—" इत्यादिना समासः॥ शरीरस्य पूर्वभागं प्रविष्टः। सङ्कुचितशरीर इत्यर्थः। अर्धावलीढैरर्धोपभुक्तैः श्रमेण आयासेन विवृतं व्यात्तं यन्मुखं तस्माद्भ्रंशिभिः अधःपतद्भिः आयासव्यात्तमुखच्युतैः दर्भैः कुशैः कीर्णमास्तृतं वर्त्म पन्थाः यस्य सः कीर्णवर्त्मा । मृगः अनेन यदा मृगो न दृश्यते तदा तस्य मार्गः भूमिपतितैर्दर्भैर्ज्ञायत इत्यर्थः । मृगः उदग्रं उन्नतं प्लुतं प्लवगमनं यस्य सः । दूरोत्पतनशालीत्यर्थः । तथाभूतत्वाद्वियति आकाशे अतिशयेन बहु बहुतरं अधिकतरं उर्व्यां भूमौ स्तोकमल्पं प्रयाति प्रकृष्टं गच्छति । धावतीत्यर्थः । पश्य प्रेक्षस्व । वाक्यार्थस्य कर्मत्वम् । स्वभावोक्तिरलङ्कारः । स्रग्धरावृत्तम् ॥ ७ ॥

अनुपतत एव पश्चाद्धावत एव । प्रयत्नप्रेक्षणीयः कृच्छ्रदृश्यः उद्घातिनी निम्नोन्नतवतीस्खलनयोग्येत्यर्थः रश्मिसंयमनात् प्रग्रहग्रहणात् विप्रकृष्टान्तरः दूरतरमध्यदेशः तेदुरासदः अत्र "नलोके" त्यादिनाविहितस्यषष्ठीनिषेधस्य शेषषष्ठ्यविषयत्वात् षष्ठी युक्ता अभीशवः प्रग्रहाः ।

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ८ ॥

राजा—सत्यम्। अतीत्य हरितो हरींश्च वर्तन्ते वाजिनः। तथाहि।

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ९ ॥

---

**मुक्तेष्विति**॥ रश्मिषु प्रग्रहेषु मुक्तेषु शिथिलितेषु सत्सु निरायतः नितरां दीर्घः पूर्वकायः शरीरस्य पूर्वभागो येषां ते तथोक्ताः निष्कम्पाः निश्चला चामराणामलङ्करणार्थं शिरसि वद्धानां शिखाः अग्राणि येषां ते तथोक्ताः। निभृतौ निश्चलौ ऊर्ध्वौ उन्नतौ च कर्णौ येषां ते तथोक्ताः। आत्मभिः स्वयं उद्धतैरुत्थापितैरपि नेम्युत्थितैस्तु सुतरामित्यपिशब्दार्थः। रजोभिः धूलिभिः अलङ्घनीयाः लङ्घयितुं स्प्रष्टुमशक्याः। अमी रथं वहन्तीति रथ्याः "तद्वहति रथयुगप्रासङ्गम्" इति यत्प्रत्यये रथ्या इति रूपं। "रथ्या रथौघविशिखावर्तनीषु च योषिति। रथवोढरि पुंलिङ्गः" इति मेदिनी॥ रथवाहिनस्तुरगाः मृगस्य हरिणस्य जवो वेगस्तस्याक्षमया अक्षान्त्येव प्राणभयादतिवेगेन पुरः पलायमानस्य मृगस्य वेगं सोढुमसमर्थतया मा वयं वेगे मृगेणानेन पराभूयेमहीतीर्ष्ययेवेत्यर्थः। धावन्ति त्वरितं गच्छन्ति। स्वभावोक्तिरलङ्कारः। उत्प्रेक्षा च। वसन्ततिलकं वृत्तम्॥ ८॥

हरितः हरिद्वर्णानिन्द्राश्वान् हरीन् सूर्याश्वांश्च चकारस्समुच्चये। स्ववेगेनेन्द्राश्वास्सूर्याश्वाश्चैभिर्जिताइत्यर्थः। अन्येषां कागणनेतिभावः।

**यदालोक इति**॥ आलोके दर्शने यद्वस्तु सूक्ष्मम्। दूरवशादल्पं दृश्यत इति शेषः। तद्वस्तु सहसा हठात् अनन्तरक्षण एवेत्यर्थः। विपुलतां स्थौल्यं व्रजति प्राप्नोति। स्थूलं दृश्यत इति भावः। सन्निकर्षादित्याशयः। यद्वस्तु अर्धे मध्ये विच्छिन्नं सान्तरं तत् कृतसन्धानमिव कृतसंश्लेषमिव भवति। पूर्वं विच्छिन्नमपि रथवेगवशादस्मिन् क्षणे लग्नमिव दृश्यत इति भावः। प्रकृत्या स्वभावतः यद्वस्तु वक्रं कुटिलं तदपि नयनयोः समरेखं समा ऋजुः रेखा दीर्घाकृतिः यस्य तत्तथोक्तं

सूत, पश्यैनं व्यापाद्यमानम् । (इति शरसंधानं नाटयति ।)

(नेपथ्ये ।)

भो भो राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

सूतः—(आकर्ण्यावलोक्य च ।) आयुष्मन्, अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

राजा—(ससंभ्रमम्) तेन हि प्रगृह्यन्तां वाजिनः ।

सूतः—तथा । (इति रथं स्थापयति ।

(ततः प्रविशत्यात्मना तृतीयो वैखानसः ।)

वैखानसः—(हस्तमुद्यम्य ।) राजन्, आश्रममृगोऽयं नहन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।

भवति । नयनयोरेव न तु वस्तुत इत्यर्थः । ऋज्विव दृश्यत इति भावः । मे मम दूरे क्षणमपि किञ्चिन्न भवति । पार्श्वे वामदक्षिणपार्श्वयोश्च क्षणमपि किञ्चिन्न भवति । क्षणमपीति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥ रथजवादिति हेतुः सर्वत्र सम्बध्यते । रथवेगवशात् क्षणमात्रमपीदं विप्रकृष्टं सन्निकृष्टमिति वक्तुं न शक्यमित्यभिप्रायः । स्वभावोक्तिरलङ्कारः । शिखरिणी वृत्तम् ॥ ९ ॥

व्यापाद्ययानम् हन्यमानम् । बाणपातवर्तिनः बाणाः पात्यन्तेऽस्मिन्निति बाणपातः "अधिकरणे घञ्" इति घञ् शरपतनप्रदेशः तस्मिन्वर्तत इति तस्य आत्मनातृतीयः आत्मनास्वेनतृतीयः । त्रित्वसंख्यापूरकः स्वयमेकश्चान्यौद्वावित्यर्थः । "आत्मनश्चपूरण" इत्यलुक्समासः । वैखनसाः विखनसो मतं वैखानसं तत्र परिनिष्ठिताः वानप्रस्थाः "वैखानसो वनेवासो वानप्रस्थश्चतापसः" इति वैजयन्ती ।

न खल्विति ॥ पुष्पराशौ अग्निरिव मृदुनि सुकुमारे । शरपातसहनाक्षम इति यावत् अस्मिन् मृगशरीरे बाणः न खलु न खलु सन्निपात्यः । नैव निक्षेपणीय इत्यर्थः । यथा पुष्पराशावग्निर्न सन्निपात्यः तथा प्रकृतमृगशरीरे बाण इत्यर्थः । सम्भ्रमे द्विरुक्तिः । तूलराशाविति क्वचित्पाठः । कुत इत्याह—हरिणकानां दयनीयानां मृगाणां । अनुकम्पायां कन्प्रत्ययः । अतिलोलं अतिचञ्चलं । लघुकारणापायी-

क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाताः सारपुङ्खाः शरास्ते ॥ १० ॥

तत्साधु कृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ ११ ॥ निरपराधे.

राजा—एष प्रतिसंहृतः । (इति यथोक्तम् करोति ।)

वैखानसः—सदृशमेतत्पुरुवंशप्रदीपस्य भवतः ।
जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ १२ ॥

---

त्यर्थः । जीवितं जीवनं क्व कुत्र । निशितास्तीक्ष्णाः । दुः सहा इति यावत् । निपाताः येषां तथोक्ताः । साराः स्थिरांशाः दृढा इत्यर्थः । पुङ्खाः मूलदेशाः येषां ते शराः क्व कुत्र । क्व द्वयमेतयोर्वैषम्यं सूचयति बतेति खेदे अनुकम्पायां वा। अत्रातिलोलमृगजीवितामोघबाणपतनयोरननुरूपयोर्घटनाद्विषमालङ्कारभेदः उपमा च । मालिनी वृत्तम् ॥ १० ॥

तदिति ॥ तत् यस्मादाश्रममृगोयं न हन्तव्यस्तस्मात् साधु सम्यक् कृतं सन्धानं यस्य तं मृगवधार्थं शरासने सम्यक्संहितमित्यर्थः । साधुशब्देनापराद्धपृषत्काभावो ध्वन्यते । सायकं बाणं प्रतिसंहर उपसंहर । शरासनादुत्सार्य तूणीरे निवेशयेत्यर्थः । उक्तमेव विशदयति—आर्तेति । वः पौरवाणां युष्माकं । तवैकस्यैव नभवतीत्यर्थः : । शस्त्रमायुधं आर्तानां विपन्नानां त्राणाय रक्षणाय । अनागसि अकृतापराधे प्रहर्तुं प्रहरणाय न भवतीति शेषः ॥ ११ ॥

जन्मेति ॥ यस्य पुरोः पुरुनाम्नो राज्ञः वंशे जन्म तस्य तव इदं निषेधमात्रेणैव बाणोपसंहरणं युक्तरूपं अतिशयेन युक्तम् । "प्रशंसायां रूपप्" इति रूपप्प्रत्ययः । लोके यस्य सार्वभौमत्वमस्ति तस्य शिष्टवचनकरणविनयादिगुणो नास्ति । पुरुवंश्यानां राज्ञामेतद्द्वयमप्यस्ति । अतस्तादृशवंशोत्पन्नस्य तवेदृगाचरणं वंशानुरूपमित्यर्थः । एवंगुणोपेतं ईदृशगुणसम्पन्नं गुणैः सर्वथा स्वसदृशमित्यर्थः । चक्रवर्तिनं सार्वभौमं आप्नुहि लभस्व । आशिषि लोट् ॥ १२ ॥

प्रतिगृहीतम् स्वीकृतम् । समिदाहरणाय समिधां यज्ञीयकाष्ठानां आहरणाय आनयनाय । कुलपतेः कुलं मुनिसमुदायः तस्य पतिः तस्य कुलपतिलक्षणं यथा "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसवैकुलपतिः

**इतरौ**—(बाहू उद्यम्य ।) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

**राजा**—(सप्रणामम् ।) प्रतिगृहीतम् ।

**वैखानसः**—राजन्, समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः, प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च ।

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ १३ ॥

**राजा**—अपि संनिहितोऽत्र कुलपतिः ।

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

---

स्तृतः" इति अनुमालिनीतीरं मालिन्यास्तीरे विभक्त्यर्थेऽव्ययीभावः । अन्यकार्यातिपातः कार्यान्तरातिक्रमः । आतिथेयः अतिथिषु साधुः "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ् आतिथेयस्सत्कारः अभ्यागतजनोचितभ्यर्हणा ।

**रम्या इति** ॥ तपः संयम एव धनं येषां ते तपोधनास्तेषां प्रतिहता निरस्ताः विघ्नाः अन्तरायाः यासां तास्तथोक्ताः अत एव रम्याः वेदचोधितविधेरनपेतत्वेन मनोहराः यथाशास्त्रं प्रवृत्ता इतियावत् । क्रियाः यागादिकर्माणि समवलोक्य सम्यग्दृष्ट्वा मौर्व्याः किणः ज्याघातजनितव्रणः अङ्कः लाञ्छनं यस्मिन्सः । अनवरतज्याघर्षणेन त्वचि विकृतिमापन्न इत्यर्थः । मे भुजः किंपरिमाणकं कियद्रक्षतीति ज्ञास्यसि । तपस्विनां निष्प्रत्यूहतपश्चर्यावीक्षणेन मद्बाहुरियद्रक्षतीति स्वभुजवीर्यं ज्ञास्यसीत्यर्थः । आर्या वृत्तम् ॥ १३ ॥

**दुहितरमिति** ॥ शिष्यादिपुंव्यक्तिसाध्ये कर्मणि दुहितुर्नियोगश्शकुन्तलायाः अतिथिविशेषाभ्यर्हणाभिज्ञतोपयोगिवयोवस्थां सूचयति । प्रतिकूलं परिणयप्रतिबन्धकम् दैवं । सोमतीर्थम् तन्नामकं सिद्धस्थानविशेषम् । साधयामः निर्वर्तयामः प्रकृतं समिदाहरणादिकमनुतिष्ठामः । "सिध्यतेरपारलौकिके" इत्यात्वम् । अथ वा साधयामः गच्छामः तदुक्तम् "प्रायेणण्यन्तकस्साधिर्गमेःस्थाने प्रयुज्यते" इति । आभोगः पूर्णता सीमेति यावत् ।

उपरोधः निर्बन्धः पीडेतियावत् । माभूत् "माङिलुङि" तिलुङ् । यावदतराम्यवतरिष्यामि "यावत्पुरानिपातयोर्लट्" इति भविष्यतिलट् आर्द्रपृष्ठाः आर्द्राणि

**राजा**—भवतु। तामेव द्रक्ष्यामि। सा खलु विदितभक्तिर्मां महर्षेः कथयिष्यति।

**वैखानसः**—साधयामस्तावत्। (इति सशिष्यो निष्क्रान्तः।)

**राजा**—सूत, चोदयाश्वान्! पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे।

**सूतः**—यदाज्ञापयत्यायुष्मान्। (इति भूयो रथवेगं निरूपयति।)

**राजा**—(समन्तादवलोक्य) सूत, अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति।

**सूतः**—कथमिव।

**राजा**—किं न पश्यति भवान्। इह हि

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः। Stones.
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः॥ १४॥

---

सिक्तानि पृष्ठानि येषान्ते सिक्तकायोपरिभागा इत्यर्थः। निमित्तं शकुनं शुभसूचकं नेत्रस्फुरणादि सूचयन्नभिनयन्।

नीवारा इति॥ इह अस्मिन् भूभागे शुकाः कीराः गर्भेऽभ्यन्तरे येषां तानि। शुकैरध्युषितानीत्यर्थः। तादृशानि यानि कोटराणि तेषां मुखेभ्योद्वारेभ्यो भ्रष्टाः विगलिताः नीवाराः तृणधान्यानि तरूणां वृक्षाणां अधःमूलभागे दृश्यन्ते लक्ष्यन्ते। अनेन तपोवनत्वं सूच्यते। आश्रमव्यतिरिक्तस्थले किरातादिभयात् शुकानां स्वैरविहाराभावेन वृक्षाधोभागे नीवारा न स्युरितिभावः। क्वचित्कस्मिंश्चित्प्रदेशे प्रकर्षेण स्निग्धाः स्नेहलिप्ताः प्रस्निग्धाः उपलाः अश्मानः इङ्गुदीनां तापसतरूणां फलानि भिन्दन्तीति तादृशाः सूच्यन्ते द्योत्यन्त एव। उपलेषु तैललेपदर्शनेन तापसास्तैलवहुलानींगुदीफलानि तैर्भिन्दन्तीति प्रतीयते। मृगाः हरिणाः विश्वासस्य शमप्रधाने तपोवने सञ्चरतामस्माकं न कुतोपि भीरित्येवंरूपस्य प्रत्ययस्य उपगमाल्लाभात् अभिन्नाः अव्याहतकृताः गतयः स्वैरसञ्चाराः येषां तादृशाः सन्तः शब्दं रथध्वनिं सहन्ते असम्भ्रममाकर्णयन्ति। अपरिचितरथशब्दमाकर्ण्य न भयेन

सूतः—सर्वमुपपन्नम् ।

राजा—(स्तोकमन्तरं गत्वा ।) तपोवननिवासिनामुपरोधो मा भूत् । एतावत्येव रथं स्थापय यावदवतरामि ।

सूतः—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

राजा—(अवतीर्य ।) सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम । इदं तावद्गृह्यताम् । (इति सूतस्याभरणानि धनुश्चोपनीयार्पयति ।) सूत, यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः—तथा । (इति निष्क्रान्तः ।)

राजा—(परिक्रम्यावलोक्य च ।) इदमाश्रमद्वारम् । यावत्प्रविशामि । (प्रविश्य निमित्तं सूचयन् ।)

शान्त मिद माश्रमपदं स्फुरति च बाहुः कुतः फल मिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १९ ॥

---

पलायन्त इति भावः । अयं च विस्रब्धमृगसञ्चारः आश्रमेऽहिंसां सूचयति । तोयाधाराणां जलाशयानां पन्थानः गमनागमनमार्गाः । तोयाधारपथाः इत्यत्र "ऋक्पूरब्धूः" इति समासान्तोऽप्रत्ययः । वल्कलानां तपोवनवासिभिः शरीराच्छादकत्वेनोपयुक्तानां तरुत्वचां शिखाभ्यः प्रान्तेभ्यः ये निष्यन्दाः सलिलस्रावाः निष्यन्द इति "अनुविपर्यभिनिभ्यः" इति विकल्पेन षत्वं तेषां रेखाभिः श्रेणिभिः अङ्किताः लाञ्छिताः स्नानोत्तीर्णानां तपस्विनां वल्कलप्रान्तेभ्यो विगलिताभिः सलिलधाराभिश्चिह्निता दृश्यन्त इत्यर्थः । एभिर्विशेषणैरिदं तपोवनमिति ज्ञायत इति भावः । स्वभावोक्तिरलङ्कारः शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

शान्तमिति ॥ इदं आश्रमपदं आश्रमस्थानं शान्तं शमप्रधानम् । अत्र रागद्वेषादेश्चेतनधनधर्मत्वादाश्रमपदस्य तदसम्भवादाश्रमस्था लक्ष्यन्ते । तथाच आश्रमस्था ऋषयः शमप्रधाना इत्यर्थः । बाहुः दक्षिणभुजः । अत्र यद्यपि बाहुरिति सामान्यशब्दः प्रयुक्तः न तु दक्षिणः सव्य इति विशेषः । तथापि प्रकरणबलाद्दक्षिणबाहुरेव गृह्यते । स्फुरति स्पन्दते अस्य फलमुक्तमद्भुतसागरे । "वामेतरभुजस्पन्दो वरस्त्रीलाभसूचकः" इति । इह अस्य बाहुस्फुरणस्य फलं वरस्त्रीलाभरूपं कुतः कुतो हेतोः स्यात् । आश्रमपदस्यातिशान्ततया न कदाचिदीदृशे स्थाने वरस्त्रीलाभः सम्भवेदित्यर्थः । अथ विमृश्य स्वयमेव सम्भावनामपि दर्शयति । अथ-

(नेपथ्ये ।)

ईदो इदो सहीओ ।

**राजा**—(कर्णं दत्वा ।) अये, दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदत्र गच्छामि । (परिक्रम्यावलोक्य च ।) अये, एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । (निपुणं निरूप्य ।) आहो, मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १६ ॥

---

१. इत इतः सख्यौ ।

---

वेति । अथवा पक्षान्तरे भवितव्यानां अवश्यम्भाविनां विषयाणां द्वाराणि मार्गाः उपाया इति यावत् । सर्वत्र भवन्ति जायन्ते । अवश्यंभाविनो विषयाः सर्वत्र सम्भवन्तीत्यर्थः । आक्षेपालङ्कारः ॥ १५ ॥

दक्षिणेनवृक्षवाटिकम् वृक्षवाटिकादक्षिणभाग इत्यर्थः "एनबन्यतरस्या" मित्येनप्प्रत्ययः । "एनपाद्वितीये" ति वृक्षवाटिकामित्यत्रद्वितीया ।

अहो मधुरमासां दर्शनमिति यदुक्तं तदेवोपपादयति—शुद्धान्तेति ॥ आश्रमवासिनः आश्रमे वस्तुं शीलं यस्य तस्य जनस्य अरण्ये मूलफलादिपारिमिताहारक्लिष्टतया भोगरहितस्येत्यर्थः । इदं परिदृश्यमानं वपुर्यदि शरीरं तु अत्र यदीत्येतदव्ययं तुशब्दार्थकम् । शुद्धान्तेषु राज्ञामन्तःपुरेष्वपि दुर्लभं दुष्प्रापम् । अत्र केचिदेवं योजयन्ति । इदं वपुः शुद्धान्तदुर्लभं यदि तदाउद्यानलताः वनलताभिर्गुणैर्दूरीकृता इति । तदसङ्गतम् । वनलताभिरुद्यानलता न दूरीकृताः इदं वपुश्च न शुद्धान्तदुर्लभमिति विरुद्धार्थप्रतीतेः । यत्र सकलसौख्यवत्त्वेन शरीरे लावण्याद्यतिशयो दृश्यते तादृशेऽप्यन्तःपुरे जगत्त्रयैकमोहनमेतादृशं वपुर्दुर्लभमिति भावः । युक्तमिदमित्याह—दूरीकृता इति । उद्यानं राजकीयमुपवनं तत्र प्रयत्नेनारोपिताः प्रत्यवेक्षिताश्च लताः वनलताभिररण्योद्भवाभिर्लताभिः गुणैः सौगन्ध्यादिभिः दूरीकृताः खलु दूरे क्षिप्ताः खलु । पराभूता इतियावत् । खलु प्रसिद्धौ । आर्या वृत्तम् ॥ १६ ॥

प्रतिपालयामि प्रतीक्षे । आलवालपूरणे वृक्षमूलगतपरिखापूरणे । असाधुदर्शी साधुसम्यक्पश्यतीति साधुदर्शी सनभवतीत्यसाधुदर्शी उचितव्यवहारानाभिज्ञ इत्यर्थः। आश्रमधर्मे तपस्विजनोचितकृत्ये ।

यावदिमां छायामाश्रित्य प्रतिपालयामि । (इति विलोकयन्स्थितः ।)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।)

शकुन्तला—इदो[1] इदो सहीओ ।

अनसूया—हला[2] सउन्दले, तुवत्तो वि तादकस्सवस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि । जेण णोमालिआकुसुमपेलवा तुमं वि एदाणं आलवालपूरणे णिउत्ता ।

शकुन्तला—ण[3] केअलं तादणिओओ एव्व । अत्थि मे सोदरसणेहो एदेसु । (इति वृक्षसेचनं रूपयति ।)

राजा—कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान्काश्यपः, य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपु-
स्तपः क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥ १७ ॥

---

१. इत इतः सख्यौ ।

२. हला शकुन्तले, त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता ।

३. न केवलं तातनियोग एव । अस्ति मे सोदरस्नेह एतेषु ।

---

असाधुदर्शित्वमेवोपपादयति । इदमिति । यः ऋषिः इदं पुरो दृश्यमानं अव्याजेन कृत्रिमशोभां विनैव । मनोहरं मनोज्ञं स्वभावसुन्दरं भूषणादिराहित्येऽपि चित्ताकर्षणशीलमितियावत् । वपुः शरीरं तपसः मुनिव्रतस्य चान्द्रायणादेः क्षमं योग्यम् । तपश्चरणसमर्थमित्यर्थः । साधयितुं संपादयितुं इच्छति अभिलषति स ध्रुवं निश्चितं नीलोत्पलस्य इन्दीवरदलस्य धारया तीक्ष्णाग्रेण । अत्यल्पसाधनेनेतियावत् । समिल्लतामतिकठिनां समिच्छाखां छेत्तुं व्यवस्यति यतते । यथातिकोमलेन नीलोत्पलदलेनातिकठिनायाः समिच्छाखायाश्छेदनमसम्भावितम् तथा शिरीषकुसुमसुकुमारस्य शकुन्तलावपुषः अतिदुश्चरमुनिव्रतसंपादनक्षमत्वसाधनं न सम्भवति । तथा च सर्वथा मुनिरसाध्यं कर्तुमुद्युङ्क्ते इत्यर्थः । वंशस्थं वृत्तम् ॥१७॥

भवतु। पादपान्तर्हित एव विस्रब्धं तावदेनां पश्यामि । (इति तथाकरोति ।)

शकुन्तला—[1]सहि अणसूए, अदिपिणद्धेण वक्कलेण पिअंवदाए णिअन्तिद म्हि । सिढिलेहि दाव णं ।

अनसूया—[2]तह (इति शिथिलयति ।)

प्रियंवदा—(सहासम् ।) [3]एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

राजा—काममननुरूपमस्या वयसो वल्कलं न पुनरलंकारश्रियं न पुष्यति । कुतः ।

सरसिजमनुविद्धं शैवलेनापि रम्यं covered.
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १८ ॥

---

१. सखि अनसूये, अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेतत् ।

२. तथा ।

३. अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व ।

---

शिथिलय शिथिलंकुरु अत्रपयोधरेति । वल्कलस्यबन्धनदार्ढ्यं न मयाकृतं किन्तु तव यौवनविहितं अतस्तनपरिणाह हेतुभूतं तवतारुण्यमेवोपालम्भनीयम् ।

सरसिजमिति ॥ शैवेलनापि जलनील्यापि । अरम्यपदार्थेनापीत्यर्थः । अनुविद्धं संश्लिष्टं सरसिजं पद्मं रम्यं मनोहरं । जलनीलीसंबद्धं चेन्मञ्जुलरससंबद्धं किमु वक्तव्यमित्यपिशब्दार्थः । वस्तुनः स्वाभाविकरमणीयतया निकृष्टपदार्थसंसर्गेणापि हृद्यमेव भवतीति भावः । हिमांशोश्चन्द्रस्य मलिनमपि अदर्शनीयमपि लक्ष्म चिह्नं कलङ्क इत्यर्थः । लक्ष्मीं शोभां तनोति करोति । तस्यैवेति शेषः । स्वयं मलिनोपि कलङ्कश्चन्द्रस्य रमणीयतामेव तनोतीत्याशयः । इयं तन्वी कृशाङ्गी शकुन्तला वल्कलेनापि परिधानायोग्यतरुत्वचापि अधिकमनोज्ञा अतिमनोहरा । अत्रार्थान्तरं न्यस्यति । किमिवेति । मधुराणां प्रकृत्या मनोहराणां आकृतीनां किमिव हि न मण्डनं किंवा वस्त्वलङ्करणं न भवति । रम्यमरम्यं वा सर्वं वस्तु शोभासम्पादकं भवति । अर्थान्तरन्यासोऽलङ्कारः । मालिनी वृत्तम् ॥ १८ ॥

शकुन्तला—(अग्रतोऽवलोक्य ।) एसो वादेरिदपल्लवङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ । जाव णं संभावेमि । (इति परिक्रामति ।)

प्रियंवदा—हला सउन्दले, एत्थ एव्व दाव मुहुत्तअं चिट्ठ । जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि ।

शकुन्तला—अदो क्खु पिअंवदा सि तुमं ।

राजा—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १९ ॥

अनसूया—हला सउन्दले, इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदा सि ।

---

१. एष वातेरितपल्लवांगुलीमिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि ।

२. हला शकुन्तले, अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति ।

३. अतः खलु प्रियंवदासि त्वम् ।

४. हला शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतवत्यसि ।

---

वातेरितपल्लवांगुलीभिः । वातेन ईरिताः कम्पिताः पल्लवा एवांगुल्यस्ताभिः ॥ लतासनाथः लतायुक्तः । यत्प्रियंवदया लतात्वमारोपितं तदेवसमर्थयति अस्याः खल्विति ।

**अधर इति** ॥ अस्याः शकुन्तलायाः अधरः ओष्ठः किसलयस्य नवपल्लवस्य राग इव रागो लौहित्यं यस्य सः । अनेन बाल्यपरित्यागो व्यज्यते । तथा बाहू भुजौ कोमलविटपौ मृदुशाखे तदनुकारिणौ तत्सदृशौ । अनेन बाह्वोरुचितपुरुषालिङ्गनक्षमत्वं ध्वन्यते । अङ्गेषु सर्वावयवेषु कुसुममिव लोभनीयं स्पृहणीयं । चित्ताकर्षकमित्यर्थः । यौवनं तारुण्यं सन्नद्धं सज्जं । उज्जृम्भितमितियावत् । अनेन वपुषः समुचितपुरुषोपभोगयोग्यता सूच्यते । उपमालङ्कारः । आर्या वृत्तम् ॥ १९ ॥

**शकुन्तला**—तदा अत्ताणं वि विसुमरिस्सं । (लतामुपेत्यावलोक्य च।) हला, रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी, बद्धपल्लवदाए उवभोअक्खमो सहआरो । (इति पश्यन्ती तिष्ठति)

**प्रियंवदा**—अणसूए, जाणासि किं सउन्दला वणजोसिणिं अदिमेत्तं पेक्खदि त्ति ।

**अनसूया**—ण क्खु विभावेमि । कहेहि ।

**प्रियंवदा**—जह वणजोसिणी अणुरूवेण पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहे त्ति ।

**शकुन्तला**—एसो णूणं तुह अत्तगदो मणोरहो । (इति कलशमावर्जयति ।)

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथवा कृतं संदेहेन ।

---

१. तदात्मानमपि विस्मरिष्यामि । हला, रमणीये खलु काल एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना, बद्धपल्लवतयोपभोगक्षमः सहकारः ।

२. अनसूये, जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति ।

३. न खलु विभावयामि । कथय ।

४. यथा वनज्योत्स्नानुरूपेण पादपेन संगता. अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

५. एष नूनं तवात्मगतो मनोरथः ।

---

नवकुसुमयौवना नवानि प्रथमोद्गतानि कुसुमान्येवयौवनं यस्यास्सा । आत्मगतः हृदयगतः । असवर्णक्षेत्रसम्भवा असमानजातीयकलत्रोत्पन्ना । ब्राह्मणेतरवर्णोत्पन्नभार्यागर्भजा । कृतं सन्देहेन कृतमित्यलमर्थेऽव्ययम् सदेहो न कर्तव्य इत्यर्थः ।

विरमतीति "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ।

असंशयं क्षत्रपरिग्रक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ २० ॥

तथापि तत्त्वत एनामुपलप्स्ये ।

**शकुन्तला**—(ससंभ्रमम्) अम्मो । सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ । (इति भ्रमरबाधां रूपयति ।)

**राजा**—(सस्पृहम्) साधु बाधनमपि रमणीयमस्याः ।

यतो यतः षट्चरणोऽभिवर्तते
ततस्ततःप्रेरितलोललोचना ।

---

१. अम्मो । सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते ।

---

असंशमिति ॥ इयं शकुन्तला संशयस्याभावः असंशयम् । अर्थाभावेऽव्ययीभावः । निःसन्देहं क्षत्र इति । क्षतात्त्रायत इतिं क्षत्रः । "सुपिस्थः" इति योगविभागात्कप्रत्ययः । पृषोदरादित्वात्पूर्वपदस्याकारलोपः । अथवा "क्षणु हिंसायाम्" इति धातोः संपदादित्वात्क्विप् । "गमादीनाम्" इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धं । क्षतो नाशात्त्रायत इति क्षत्त्रः । क्षत्रस्य क्षत्रियस्य परिग्रहः भार्यात्वेन ग्रहणं तस्य क्षमा उचिता । यत् यस्मादार्यं निर्दोषं । उत्पथधावनविमुखमितियावत् । अत्रमनसः आर्यत्वविशेषणेन मनः स्वारसिकतया न कदाप्यकार्ये प्रवर्तत इति व्यज्यते । मे मनः अस्यां अभिलाषि सानुरागं । यदीयं क्षत्रियस्य ग्रहणयोग्या न स्यात्तदा मम मनो नास्यामभिलाषि भवेदिति भावः । अमुमेवार्थमर्थान्तरन्यासेनोपपादयति—सतामिति । तथाहि । सन्देहपदेषु इदं कर्तव्यमकर्तव्यं वेत्येवंरूपसंशयास्पदेषु वस्तुषु पदार्थेषु । कार्येष्वितियावत् । साधूनामन्तःकरणस्य मनसः प्रवृत्तयः गतयः प्रमाणं सन्देहनिरासकाः । यदि तत्र मनः प्रवर्तते तदा तदविगीतम् । अन्यथातद्विगीतमिति भावः । मनःप्रवृत्तेर्धर्मनिश्चायकत्वमुक्तं मनुना—"वेदः स्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥" इति । अर्थान्तरन्यासः । वंशस्थं वृत्तम् ॥ २० ॥

यत इति । यतो यतः यस्यां यस्यां दिशि षट्चरणः भ्रमरः अभिवर्तते

विवर्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् ॥ २१ ॥

(सासूयमिव)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २२ ॥

**शकुन्तला**—ण एसो दुट्ठो विरमदि । अण्णदो गमिस्सं । (पदान्तरे स्थित्वा सदृष्टिक्षेपम् ।) कहं इदो वि आअच्छदि । हला, परित्ताअह मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण पडिहूअमाणं ।

१. नैष दुष्टो विरमति । अन्यतो गमिष्यामि । कथमितोऽप्यागच्छति । हला, परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम् ।

गच्छति ततस्ततस्तस्यां तस्यां दिशि प्रेरिते प्रहिते लोले चले लोचने नेत्रे यया सा । तथा विवर्तिते साचीकृते भ्रुवौ यया सा तथोक्ता इयं शकुन्तला अकामापि अनिच्छन्त्यपि दृष्टिविभ्रमं कटाक्षपातादिविलासं शिक्षते अभ्यस्यति । वंशस्थं वृत्तम् ॥ २१ ॥

चलेति ॥ हे मधुकर । चलौ चञ्चलौ अपाङ्गौ नेत्रप्रान्तौ यस्मिन्कार्मणि तथाभूतं यथा यथा दृष्टः सन् वीक्षितः सन् वेपथुमतीं कम्पवतीं शकुन्तलां बहुशः बहुवारं स्पृशसि । रहसि भवं रहस्यं गोपनीयं आख्यातुं कथयितुं शीलं यस्य स इव कर्णान्तिकचरः "चरेष्टः" इत्यधिकरणे उपपदे चरेष्टप्रत्ययः । कर्णसमीपगः सन् मृदु ललितं नायकपक्षे सानुनयं । स्वनसि शब्दायसे नायकपक्षे गुप्तं भाषसे । करौ हस्तौ व्याधुन्वत्याः भ्रमरनिरासार्थं चालयन्त्याः शकुन्तलायाः रतेः सुखसम्भोगस्य सर्वस्वं सारभूतं अधरं पिबसि चुम्बसि । वयं । पूजायां बहुवचनम् । तत्वस्य इयं क्षत्रपरिग्रहक्षमा वा नेवेत्येवंरूपस्य वस्तुस्वरूपस्य, अन्वेषात् मार्गणात् हताः विफलप्रयासा जाताः । आयासमात्रपात्रीभूता इतियावत् । त्वं खलु त्वमेव । एकवचनेन निकृष्टत्वं । कृती धन्यः । समासोक्तिः । भ्रमरस्वभावोक्तिश्च । शिखरिणी वृत्तम् ॥ २२ ॥

**उभे**—(सस्मितम्।) को वअं परित्तादुं। दुस्सन्दं अक्कन्द। राअरक्खिदव्वाइं तवोवनाइं णाम।

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम् न भेतव्यं न भेतव्यम् (इत्यर्धोक्ते। स्वगतम्।) राजभावस्त्वभिज्ञातो भवेत्। भवतु। एवं तावदभिधास्ये।

**शकुन्तला**—(पदान्तरे स्थित्वा। सदृष्टिक्षेपम्।) केहं इदोवि मं अणुसरदि।

**राजा**—(सत्वरमुपसृत्य।)

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २३ ॥

(सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः।)

**अनसूया**—अज्ज, ण क्खु किंवि अच्चाहिदं। इअं णो पिअसही महुअरेण अहिहूअमाणा कादरीभूदा। (इति शकुन्तलां दर्शयति।)

---

१. के आवां परित्रातुम्। दुष्यन्तमाक्रन्द। राजरक्षितव्यानि तपोवनानि नाम।

२. कथमितोऽपि मामनुसरति।

३. आर्य, न खलु किमप्यत्याहितम्। इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता।

---

क इति॥ दुर्विनीतानां दुर्वृत्तानां "कर्तृकर्मणोः कृति" इति षष्ठी। शासितरि शास्तेः "ण्वुल्तृचौ" इति तृच्प्रत्यये "आर्धधातुकस्येड्वलादेः" इतीडागमः। शिक्षके पौरवे पुरुवंशोत्पन्ने राजनि। अनेन महाकुलीनत्वं सर्वलोकप्रसिद्धत्वमद्वितीयत्वं च ज्ञाप्यते। वसुमतीं पृथ्वीं शासति पालयति सति कोऽयं कोयमिति क्रोधेनोक्तिः। मुग्धास्वचतुरासु शाठ्यानभिज्ञास्वित्यर्थः। तपएषा मस्तीति तपस्विनः "तपःसहस्राभ्यां" इति विनिः। "तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति। मांसिकाकटुरोहिण्योः" इति मेदिनी तपस्विकन्यासु मुनिबालिकासु। अप्रगल्भास्विति भावः। अविनयं बलाद्ग्रहणरूपं दौर्जन्यं आचरति। आर्या वृत्तम्॥ २३॥

अत्र राजराजकीययोस्समवाचकपौरव शब्दप्रयोगेण राजभावत्वसन्देहाज-

राजा—(शकुन्तलाभिमुखो भूत्वा ।) अपि तपो वर्धते ।

(शकुन्तला साध्वसादवचना तिष्ठति ।)

अनसूया—दाणिं अदिहिविसेसलाहेण । हला सउन्दले, गच्छ उडअं । फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि ।

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

प्रियंवदा—तेणं हि इमस्सिं पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उवविसिअ परिस्समविणोदं करेदु अज्जो ।

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

अनसूया—हला सउन्दले, उइदं णो पज्जुवासणं अदिहीणं । एत्थ उवविसह्म । (इति सर्वे उपविशन्ति ।)

शकुन्तला—(आत्मगतम् ।) किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअह्मि संवुत्ता ।

राजा—(सर्वा विलोक्य ।) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

प्रियंवदा—(जनान्तिकम् ।) अणसूए, को णु क्खु एसो चउरगम्भीराकिदी चउरं आलवन्तो पहाववन्दो विअ लक्खीअदि ।

---

१. इदानीमतिथिविशेषलाभेन । हला शकुन्तले, गच्छोटजम् । फलमिश्रमर्घ्यमुपहर । इदं पादोदकं भविष्यति ।

२. तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

३. हला शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः ।

४. किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ।

५. अनसूये, को नु खल्वेष चतुरगम्भीराकृतिश्चतुरमालपन्प्रभाववानिव लक्ष्यते ।

---

ननार्थमात्मप्रच्छादनरूपश्चातुर्यमुक्तम् । अत्याहितं महाभीतिः । प्रच्छायशीतलायाम् प्रकृष्टा छाया यस्यास्सा प्रच्छाया तथाभूता शीतलाच विशेषणसमासः तस्यां सप्तपर्णवेदिकायाम् सप्तपर्णवृक्षस्य मूलगतचतुरस्रभूमौ । जनान्तिकम् कथान्तरमध्ये वक्रितानामिकांगुलिं करं कृत्वा यदन्योन्यामन्त्रणं

**अनसूया**—सहि, मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं। (प्रकाशम् ।) अज्जस्स महुरालावजणिदो वीसम्भो मं मन्तावेदि कदमो अज्जेण राएसिणो वंसो अलंकरीअदि, कदमो वा विरहपज्जुस्सुअजणो किदो देसो, किंणिमित्तं वा सुउमारदरो वि तवोवणगमणपरिस्समस्स अत्ता पदं उवणीदो ।

**शकुन्तला**—(आत्मगतम् ।) हिअअ, मा उत्तम्म । एसा तुए चिन्तिदाइं अणसूआ मन्तेदि ।

**राजा**—(आत्मगतम् ।) कथमिदानीमात्मानं निवेदयामि, कथं वात्मापहारं करोमि । भवतु । एवं तावदेनां वक्ष्ये । (प्रकाशम् ।) भवति, यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

**अनसूया**—सणाहा दाणिं धम्मआरिणो ।

(शकुन्तला शृङ्गारलज्जां रूपयति ।)

---

१. सखि, ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । आर्यस्य मधुरालापजनितो विस्रम्भो मां मन्त्रयते कतम आर्येण राजर्षेर्वंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः, किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ।

२. हृदय, मोत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते ।

३. सनाथा इदानीं धर्मचारिणः ।

---

तज्जनान्तिकम् तल्लक्षणं यथा । "त्रिपताककरेणान्यानपवार्यान्तराकथाम् । अन्योन्यामन्त्रणं यत्स्यात्तजनान्तेजनान्तिकम्" इति । प्रकाशमिति । तल्लक्षन्तु "सर्वश्राव्यं प्रकाशं स्यात्" इति । मोत्ताम्यमोत्कण्ठितं भव । कथमिदानीमिति—अत्रात्मनिवेदने सति विस्रम्भभाषणाद्यसिद्धेः स्वकार्यहानिः आत्मापहारेसति मृषावादित्वदोषः तस्मादुभयमप्ययुक्तभावः । पौरवेण पुरुवंशोद्भवेन राज्ञा दुष्यन्तेन धर्माधिकारे तपोवनप्रत्यवेक्षणव्यपारे नियुक्तः कश्चन पुरुष इति तेषां स्वस्मिन्विस्रम्भोत्पादनम् । पौरवेण पुरुवंशोत्पन्नेन राज्ञास्वपित्रा स्वयं नियुक्त इति सत्यार्थकथनान्नात्मापहारदोषः । अविघ्नक्रियोपलम्भाय निर्विघ्नतपोऽनुष्ठानपरिज्ञानाय । काश्यप-

सख्यौ—(उभयोराकारं विदित्वा । जानान्तिकम् ।) [1]हला सउन्दले, जइ इत्थ अज्ज तादो संणिहिदो भवे ।

शकुन्तला—[2]तदो किं भवे ।

सख्यौ—[3]इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि ।

शकुन्तला—[4]तुह्मे अवेध । किं वि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं ।

राजा—वयमपि तावद्भवत्योः सखीगतं पृच्छामः ।

सख्यौ—[5]अज्ज, अणुग्गहो विअ इअं अब्भत्थणा ।

राजा—भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ।

अनसूया—[6]सुणादु अज्जो । अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी ।

राजा—अस्ति । श्रूयते ।

अनसूया—[7]तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसंवढणादिहिं तादकस्सवो से पिदा ।

---

१. हला शकुन्तले, यद्यत्राद्य तातः संनिहितो भवेत् ।

२. ततः किं भवेत् ।

३. इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

४. युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि ।

५. आर्य, अनुग्रह इवेयमभ्यर्थना ।

६. शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

७. तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता ।

---

कश्यपगोत्रोद्भवः प्रकृते कण्वः अत्र कण्व इति वक्तव्ये काश्यपशब्दप्रयोगः "विप्रक्षत्रियनामानि कुर्याद्गोत्रानुसारत" इति वचनात्सूपपद्यते । शाश्वतेब्राह्मणि नैष्ठिकब्रह्मचर्ये । कौशिकः कुशिकस्यापत्यमिति स्ववंशनाम्ना विख्यातनामा विश्वामित्रः ।

राजा—उज्झितशब्देन जनितं मे कौतूहलम् । आ मूलाच्छ्रोतुमिच्छामि ।

अनसूया—सुणादु अज्जो । गोदमीतीरे पुरा किलतस्सराएसिणो उग्गे तवसि वट्टमाणस्स किंवि जातसङ्केहिं देवेहिं मेणआ णाम अच्छरा पेसिदा णिअमविग्घकारिणी ।

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अनसूया—तदो वसन्तोदारसमए से उम्मादइत्तअं रूवं पेक्खिअ (इत्यर्धोक्ते लज्जया विरमति ।)

राजा—परस्ताज्ज्ञायत एव सर्वथाप्सरःसंभवैषा ।

अनसूया—अह इं ।

राजा—उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २४ ॥

---

१. श्रृणोत्वार्यः । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी ।

२. ततो वसन्तोदारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य ।

३. अथ किम् ।

---

अन्यसमाधिभीरुत्वम् अन्येषां समाधिः तस्मात् भीरुत्वम् उद्विग्नत्वम् । वसन्तावताररमणीये वसन्तस्य अवतारेणाविर्भावेन रमणीये मनोहरे ।

मानुषीष्विति ॥ मनोरपत्यानि स्त्रियो मानुष्यः तासु "मनोर्जातावञ्यतौ षुक् च" इत्यञ्षुकौ । ततः "टिड्ढाणञ्" इति ङीपं बाधित्वा जातिलक्षणो ङीष् । अस्य निर्जितरतिलावण्यस्य रूपस्य सौन्दर्यस्य । रूपलक्षणं तूक्तम् "अङ्गान्यभूषितान्येव प्रक्षेपाद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥" इति । सम्भवः उत्पत्तिः कथं वा स्यान्न कदाचित्सम्भवतीत्यर्थः । तदेव विशदयति—नेति । प्रभया दीप्त्या तरलं चञ्चलं ज्योतिः विद्युत् वसुधातलात् भूतलान्नोदेति नाविर्भवति । आकाशे मेघादेवोदेतीत्यर्थः । यथाभूगर्भाद्विद्युदुद्भवो न सम्भवति तथा मानुषीगर्भादीदृशं रूपं न सम्भवतीत्यर्थः । प्रतिवस्तूपमालङ्कारः ॥ २४ ॥

(शकुन्तलाधोमुखी तिष्ठति ।)

**राजा**—(आत्मगतम् ।) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**—(सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा ।) पुणो वि वत्तुकामो पिअ अज्जो ।

(शकुन्तला सखीमंगुल्या तर्जयति ।)

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**—अलं विआरिअ । अणिअन्तणाणुओओ तवस्सिअणो णाम ।

**राजा**—इति सखीं ते ज्ञातुमिच्छामि ।

वैखानसं किमनया व्रतमाप्रदाना-
द्व्यापाररोधि मदनस्य निषेवितव्यम् ।

१. पुनरपि वक्तुकाम इवार्यः ।
२. अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ।

हन्तेति हर्षे मे मनोरथः शकुन्तलाविषयाभिलाषः लब्धावकाशः प्राप्त प्रवेशः । अनियन्त्रणानुयोगः नविद्यते नियन्त्रणं यस्यसः अनियन्त्रणः अप्रतिबन्धः अनुयोगः प्रश्नः यस्मिन् सः तपस्विजनः यथेष्टं प्रष्टुं शक्यते सर्वैरिति भावः ।

**वैखानसमिति** ॥ अनया तव सख्या शकुन्तलया कोमलाङ्गतया दुश्चरमुनिव्रतानुष्ठानानर्हयेत्यर्थः । मदनस्य मन्मथस्य व्यापाररोधि व्यापारं प्रवृत्तिं रुणद्धीति तथोक्तं आप्रदानादिति व्यस्ते पदे । विखनसा मतं वखानसं तत्र परिनिष्ठिताः वैखानसाः वैखानससूत्र एव वानप्रस्थस्योक्तत्वात् । वैखानसव्रतमुक्तम् मनुना "पुष्पमूलफलैर्वापि केवलैर्वर्तयेत्सदा । कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः" इति । वैखानसाः वानप्रस्थाः तेषामिदं वैखानसं व्रतं फलमूलाशनपूर्वकं विषयवैमुख्येन वनवासरूपो धर्मः । किं आप्रदानाद्विवाहपर्यन्तं निषेवितव्यं नितरामनुष्ठेयं आहो अथवा अत्यन्तमेव यावज्जीवमेव मदिरेव ईक्षणे यासां ताः मदिरेक्षणाः अत एव वल्लभाः प्रियाः ताभिः हरिणाङ्गनाभिः समं मृगीभिः समम् । अनेन स्त्रीत्वसजाती-

अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २५ ॥

प्रियंवदा—[1]अज्ज, धम्मचरणे वि परवसो अअं जणो। गुरणो उण से अणुरूववरप्पदाणे संकप्पो।

राजा—(आत्मगतम्।) न दुरवापेयं खलु प्रार्थना।

भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २६ ॥

शकुन्तला—(सरोषमिव।) [2]अणसूए, गमिस्सं अहं।

---

१. आर्य, धर्मचरणेऽपि परवशोऽयं जनः। गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः।

२. अनसूये, गमिष्याम्यहम्।

---

यत्वं दृष्टिचाञ्चल्यादिसाधर्म्यं च सूचितम्। निवत्स्यति वासं करिष्यति। सदृशेक्षणवल्लभाभिरिति पाठे सदृशे आत्मनस्तुल्ये ईक्षणे यासां ताश्च ताः वल्लभाः प्रियाश्चेति तादृशीभिरित्यर्थः। अयं भावः—यदीयं राज्ञे देया तदा विवाहपर्यन्तमेवाश्रमे स्थास्यति तदनन्तरमविरोधो विषयोपभोगः यदि कस्मैचित्तपस्विने देया तदामृगमिथुनवद्विषयोपभोगरहिता वन एव स्थास्यति। अतः किमस्या अनुरूपो राजर्षिर्वरत्वेनाभिमतः आहोस्वित्कश्चित्तापस एवेति राज्ञः प्रश्नः। वसन्ततिलकं वृत्तम् ॥ २५ ॥

धर्माचरणेऽपिपरवशः। अनेनाश्रमवासितया सामान्यतः प्राप्ते धर्मानुष्ठानेप्यस्वतन्त्रस्यास्यजनस्य अन्यस्मिन् स्वातन्त्र्यं नास्तीति भावः। अपि शब्देन धर्माचरणस्य स्वच्छन्दकरणीयत्वं सूचितम्।

भवेति ॥ हे हृदय, त्वं साभिलाषं सकामं भव। तत्र हेतुमाह—संप्रतीति। संप्रति अधुना सन्देहे सति इयं मुनिकन्या क्षत्रियकन्या वेति संशये सति निर्णयः क्षत्रपरिग्रहक्षमेतिनिश्चयः जातः। किमियं क्षत्रपरिग्रहक्षमा न वेति संशयो निवृत्तः। निर्णयमेव विवृणोति—आशङ्कस इति। यद्वस्तु अग्निमाशङ्कसे कान्तिसाधर्म्यादग्निं मन्यसे तदिदं वस्तु स्पर्शक्षमं स्पर्शयोग्यं। उपभोगयोग्यमितियावत्। रत्नं कन्यारत्नं। रत्नशब्देन रूपलावण्याद्यतिशययोगिता सूच्यते। काव्यलिङ्गमलङ्कारः ॥ २६ ॥

अनसूये—[1]किंणिमित्तं ।

शकुन्तला—[2]ईमं असंवद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं ।

अनसूया—[3]सहि, ण जुत्तं अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं ।

(शकुन्तला न किंचिदुक्त्वा प्रस्थितैव ।)

राजा—(ग्रहीतुमिच्छन्निगृह्यात्मानम् । आत्मगतम् ।) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २७ ॥

प्रियंवदा—(शकुन्तलां निरुध्य ।) [4]हला, ण दे जुत्तं गन्तुं ।

शकुन्तला—(सभ्रूभङ्गम् ।) [5]किंणिमितं ।

---

१. किंनिमित्तम् ।
२. इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।
३. सखि, न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।
४. हला, न ते युक्तं गन्तुम् ।
५. किंनिमित्तम् ।

---

अहो चेष्टेत्यादि ॥ अहो इत्याश्चर्ये चेष्टायाः आङ्गिकक्रियायाः प्रतिरूपिका सदृशी यादृशी चेष्टातादृश्येवमनोवृत्तिः । कामिनां मनोव्यापारः शरीरव्यापारेण तुल्यं प्रवर्तत इत्यर्थः एतदेवोपपादयदि । अहंहीत्यादि ।

अनुयास्यन्निति । मुनितनयां ऋषिपरिपोषितां शकुन्तलां अत्रसम्बन्धमात्रविवक्षया समासः कृतः । अनुयास्यन् अनुसरिष्यन् तत्सौन्दर्यबलादवशः सन्मन्मथकार्येण बलाद्गृहीतुमनुगमिष्यन्नित्यर्थः । "लृटस्सद्वा" इति शतृप्रत्ययः । सहसा बलात् । विनयेन जितेन्द्रियतया "इन्द्रियाणां जयं प्राह विनयं भरतो मुनिः" इत्युक्तेः । वारितः निरुद्धः प्रसरो वेगो यस्य स तथाभूतः स्थानात् अध्यासितस्थलात् । अनुच्चलन्नपि अचलोऽपि गत्वा प्रतिनिवृत्तः प्रत्यागत इवास्मि । उत्प्रेक्षालङ्कारः । आर्या वृत्तम् ॥ २७ ॥

प्रियंवदा—रुक्खसेअणे दुवे धारेसि मे। एहि जाव। अत्ताणं मोचिअ तदो गमिस्ससि। (इति वलादेनां निवर्तयति।)

राजा—भद्रे, वृक्षसेचनादेव परिश्रान्तामत्रवतीं लक्षये। तथा ह्यस्याः

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-

दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।

बद्धं कर्णशिरीषरोधि वदने धर्माम्भसां जालकं

बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ २८ ॥

तदहमेनामनृणां करोमि। (इत्यंगुलीयं दातुमिच्छति।)

(उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः।)

---

३. वृक्षसेचने द्वे धारयसि मे। एहि तावत्। आत्मानं मोचयित्वा ततो गमिष्यसि।

---

मेधारयतीत्यत्र "धारेरुत्तमर्ण" इति सम्प्रदानसंज्ञा।

**स्रस्तांसाविति**। घटस्य जलपूर्णकलशस्य उत्क्षेपणात् उत्तोलनात्। अयं हेतुः सर्वत्र संवध्यते। बाहू भूजौ स्रस्तौ नतौ अंसौ स्कन्धौ ययोस्तौ तथा अतिमात्रं लोहिते तले ययोस्ते भवत इति शेषः। करतलं तु पूर्वमेव रागयुक्तम्। इदानीं कलशोन्नयनादतिशयितरागमिति भावः। अद्यापि अधुनापि वृक्षसेचने निवृत्तेऽपीत्यर्थः। प्रमाणं स्वभाविकम् श्वासमानं। तस्मादधिकः प्रबलतरः। मात्रातिलङ्घीत्यर्थः। श्वासः स्तनयोर्वेपथुं कम्पं जनयति उत्पादयति। वदने मुखे कर्णावतंसीकृतं शिरीषपुष्पं कर्णशिरीषं। मध्यमपदलोपी समासः। तद्रोद्धुं शीलं यस्य तत्तथोक्तं घर्माम्भसां स्वेदोदकानां जालकं अस्फुटकोरकरूपं बिन्दुकदम्बकं बद्धं उद्भावितम्। तथा बन्धे केशबन्धे स्रंसिनि विश्लथे सति पर्याकुलाश्चञ्चलाः मूर्धजाः केशाः एकहस्तेन वामहस्तेन दक्षिणस्य घटोत्क्षेपणव्यापृतत्वादिति भावः। यमिताः बद्धाः। स्वभावोक्तिः। शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

अनृणाम् सेचनद्वयरूपाधमर्ण्यरहिताम्। नाममुद्राक्षराणि नामरूपायाः मुद्राया अभिज्ञानस्याक्षराणि अंगुलीयकस्थितानीति शेषः अनुवाच्य पठित्वा परस्परमवलोकयतः अन्योन्यं पश्यतः असौ राजेति मत्वा परस्परं निरीक्षाते इत्यर्थः। परस्परा-

राजा—अलमस्मानन्यथा संभाव्य । राज्ञः परिग्रहोयम् ।

प्रियंवदा—तेणं हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीवीओअं । अज्जस्स वअणेण अणिरिणा दाणिं एसा । (किंचिद्विहस्य ।) हला सउन्दले, मोइदा सि अणुअम्पिणा अज्जेण, अहवा महाराएण । गच्छ दाणिं ।

शकुन्तला—(आत्मगतम् ।) जेइ अत्तणो पहविस्सं । (प्रकाशम् ।) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ।

राजा—(शकुन्तलां विलोक्य । आत्मगतम् ।) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् । अथवा लब्धावकाशा मे प्रार्थना । कुतः ।

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।

१. तेन हि नार्हत्येतदंगुलीयकमंगुलीवियोगम् । आर्यस्य वचनेनानृणेदानीमेषा । हला शकुन्तले, मोचितास्यनुकम्पिनार्येण, अथवा महाराजेन गच्छेदानीम् ।

२. यद्यात्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ।

वलोकनेनममेतेज्ञानुमिच्छत इति तयोराशयं ज्ञात्वातत्प्रच्छादनायाह । अलमित्यादि अन्यथा सम्भाव्य नृपत्वेन मत्वा अलं नाहं राजेतिमन्तव्य इत्यर्थः । परिगृह्यते स्वीक्रियत इति परिग्रहः राज्ञः परिगृहः इदमङ्गुलीयकं राजसबन्धीतिमन्तव्यमित्यर्थः । अनेनराजराजकीययोस्सामान्येन सत्यरूपेणैव वचनेनात्मप्रच्छादनं कृतम् । अथवा महाराजेनेत्यनेन प्रच्छादितोपि राजभावस्ताभ्यामभिज्ञात इत्यवगम्यते । वयमस्यांयथा यादृशः यथाहं साभिलाष इत्यर्थः इयमस्मान्प्रति एवं साभिलाषास्यादिकाकुः । लब्धावकाशा लब्धाश्रया सार्थेत्यर्थः ।

वाचमिति । यद्यपीयं शकुन्तला मद्वचोभिर्मदुक्तिभिर्वाचं निजोक्तिं न मिश्रयति । मया सह न वक्तीत्यर्थः । तथापि मयि भाषमाणे सति अभिमुखं शब्दाभिमुखं यथा तथा कर्णं ददाति । मदुक्तं सादरं शृणोतीत्यर्थः । कामं यद्यपि मदाननसम्मुखीना मन्मुखाभिमुखी न तिष्ठति । तथापि । अस्याः दृष्टिस्तु अन्यः

कामं न तिष्ठति मदाननसंमुखीना
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २९ ॥

(नेपथ्ये ।)

भो भोस्तपस्विनः, संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः

तुरगखुरहतस्तथाहि रेणु-
विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ ३० ॥

अपि च ।

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।

---

मदाननव्यतिरिक्तो विषयः गोचरः यस्याः सा तथोक्ता न भवतीति शेषः । मन्मुखं विहाय अन्यत्र न भूयिष्ठमवतिष्ठत इत्यर्थः ॥ २९ ॥

प्रत्यासन्नः निकटवर्ती ।

**तुरगेति** । यदुक्तं प्रत्यासन्नः पार्थिव इति । तत्र हेतुमाह—तथाहीति । तुरगाणां दुष्यन्तसेनास्थितानामश्वानां खुरैः शफैर्हतः उत्कीर्णः । परिणतः जरठः दिनावसानकालीन इत्यर्थः । अरुणः सूर्यस्तस्य प्रकाश इव प्रकाशो यस्य तथाभूतः । लोहितवर्ण इत्यर्थः । एतेनाश्वसञ्चरणभूमीनां गैरिकादिधातुमत्ता सूचिता । रेणुर्धूलिः शलभानां पतङ्गानां समूहः सङ्घ इव विटपेषु शाखासु विषक्तानि लगितानि जलार्द्राणि सायंकालस्नानेनार्द्राणि वल्कलानि येषां तादृशेषु जलशोषार्थं वल्कलानां विटपविषञ्जनमिति भावः । आश्रमद्रुमेषु तपोवनवृक्षेषु पतति धूलिपातेन वल्कलानां वैवर्ण्यसम्भावनया विटपेभ्यस्तान्यपसार्यन्तामित्याश्रमस्थान्प्रति सैनिकानामुक्तिरियम् । उपमालंकारः । पुष्पिताग्रा वृत्तम् ॥ ३० ॥

**तीव्रेति** । स्यन्दनस्य रथस्य अदृष्टचरस्येत्यर्थः । आलोकाद्दर्शनात् भीतः त्रासभयः गजः वन्यगजः धर्मारण्यं तपोवनं प्रविशतीति संबन्धः । गजः कीदृशः । तीव्रः प्रचण्डः य आघातः प्रहारस्तेन प्रतिहतः भग्नः यस्तरुस्तस्य स्कन्धे प्रकाण्डे लग्नः सक्तः एको दन्तो यस्य स तथोक्तः गाढप्रहारभग्नां शाखामेकेन दन्तेन वह-

मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ ३१ ॥

(सर्वाः कर्णं दत्वा किंचिदिव संभ्रान्ताः ।)

राजा—(आत्मगतम् ।) अहो धिक् । पौरा अस्मदन्वेषिणस्तपोवन-मुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

सख्यौ—[1]अज्ज, इमिणा आरण्णअवुत्तन्तेन पज्जाउल ह्म । अणु-जाणीहि णो उडअगमणस्स ।

राजा—(ससंभ्रमम् ।) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

(सर्वे उत्तिष्ठन्ति ।)

सख्यौ—[2]अज्ज, असंभाविदअदिहिसक्कारं भूओ वि पेक्खण-णिमित्तं लज्जेमो अज्जं विण्णविदुं ।

---

१. आर्य, अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटज-गमनाय ।

२. आर्य, असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावह आर्यं विज्ञापयितुम् ।

---

मित्यर्थः । पादैश्चरणैराकृष्ट आकृष्यमाणो यो व्रततिवलयः लतासमूहः तस्य आ-सक्तेन संयोगेन सञ्जातः पाशः बन्धनरज्जुर्यस्य स तथोक्तः । पादलग्नो व्रततिवलयः बन्धनरज्जुरिव प्रतीयत इत्यर्थः । न तु वस्तुतस्तेन सन्दानितत्वं तथात्वे धर्मारण्यं प्रविशतीत्युक्तिरसंगता स्यात् । किञ्च नः अस्माकं तपसः तपश्चरणस्य मूर्तः मूर्तिमान्विघ्नः प्रत्यूह इव स्थितस्तथाभिन्नानि भयात्पलयमानानि सारङ्गयूथानि मृगकुलानि यस्मात्सः । अथवा भिन्नानि विश्लेषितानि सारङ्गाणां मृगाणां यूथानि समूहाः येन सः ॥ स्वभावोक्तिः उत्प्रेक्षा च । मन्दाक्रान्ता वृत्तम् । तरुस्कन्ध-भग्नैकदन्त इति पाठे स्कन्धे भग्नः एकः दन्तः यस्य स इत्यर्थः । दन्तः मूले अग्रे वा भग्नः स्यात् न तु स्कन्धे भग्नः । अतः स्कन्धे लग्न एव भवेदिति स्कन्धलग्नै-कदन्त इति पाठः समीचीनः ॥ ३१ ॥

अनुजानीहि अनुज्ञां देहि । असम्भावितातिथिसत्कारम् । अप्रापिताथिपूजम् । अनुयात्रिकान् अनुचरान् ।

राजा—मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

(शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता ।)

राजा—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्स-मेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तला-व्यापारादात्मानं निवर्तयितुम् । मम हि

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३२ ॥

इति श्रीमहाकविकालिदासकृतावभिज्ञानशाकुन्तले प्रथमोऽङ्कः ।

---

गच्छतीति ॥ शरीरं वपुः पुरः अग्रे सेनां प्रतीत्यर्थः । गच्छति मन्दं व्रजति । अनेन बुद्धिपूर्वकं न गच्छति किन्त्ववशमेव मन्दं व्रजतीति द्योत्यते । असंस्थितं अनवस्थितम् । अस्थिरामितियावत् । चेतः मनः पश्चात्पृष्ठतः शकुन्तलां प्रतीत्यर्थः । धावति शरीरं तु शनैर्गच्छति मनस्तु त्वरितं गच्छतीति भावः । शरीरस्य पुरो मन्दगमने चित्तस्य पश्चात् त्वरितगमने च दृष्टान्तमाह । चीनेति । प्रतिवातं वाताभिमुखं नीयमानस्याकृष्यमाणस्य केतोर्ध्वजस्य चीनांशुकं चीनदेशीयं पट्टवस्त्रमिव । यथा वाताभिमुखे ध्वजेऽतिसूक्ष्मं वस्त्रमल्पेनापि वातेनोद्धूतं पश्चाद्गच्छति तद्वदिति भावः । उपमालङ्कारः । आर्या वृत्तम् ॥ ३२ ॥

इति श्रीदुग्धापगादक्षिणतीरस्थितविरिञ्चिपुराभिजन-
श्रीरामसुधीवरतनूभवशङ्करविरचिताया-
मभिज्ञानशाकुन्तलव्याख्यायां विद्व-
न्मनोरमाख्यायां प्रथमोऽङ्कः ।

---

## द्वितीयोऽङ्कः ।

---

(ततः प्रविशति विषण्णो विदूषकः ।)

**विदूषकः**—(निः श्वस्य ।) हा हदो ह्मि एदस्स मअआसीलस्स रण्णो वअस्सभावेण । अअं मओ अअं वराहो अअं सद्दूलो त्ति मज्ज-ण्णे वि गिह्मविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि । पत्तसंकर-कसाआइं कडुआइं गिरिणईजलाइं पीअन्ति । अणिअदवेलं सुह्लमंसभू-इट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डितसंधिणो मे रत्तिम्मि वि णिकामं सइदव्वं णत्थि तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउ-णिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो ह्मि । एत्तएण दाणिं वि पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिण्डओ संवुत्तो । हिओ

---

१. हा हतोऽस्म्येतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यते। पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारोऽश्यते । तुरगानुधावनखण्डितसंधेर्मे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितो-ऽस्मि । इयतेदानीमपि पीडा न निष्कामति । ततो गण्डस्योपरि पिटकः संवृत्तः ।

---

विषण्णः विषादं प्राप्तः । विदूषकः नायकपार्श्ववर्ती कामपुरुषार्थसहायो हास्यकारी नर्मसुहृत् । तदुक्तम् । "तेषां सहायारूप्यन्ते त्रिवर्गफलसाधने । धर्मे-पुरोहिताचार्ययाजकश्रोत्रियादयः । अर्थेसचिव सेनानी युवराजवलादयः । कामे विदूषकप्रेष्य पीठमर्दविटादयः ॥" तत्र विदूषकलक्षणं यथा । कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥" आहिण्ड्यते परिभ्राम्यते । प्रत्रसङ्करकषायाणि । पत्राणां सङ्करः समवायः भिन्नजातीयानामेक-त्रसंवलनमित्यर्थः तेनकषायाणि । शूल्यमांसभूयिष्ठः शूलेनसंस्कृतं लोहशलाकया संप्रथ्यपक्कं मांसम् "शूलेखाद्यदि" तियत् । दास्याः पुत्रैः "षष्ठ्या आक्रोशे" इति षष्ठ्या अलुक् वनग्रहणम् मृगग्रहणार्थमरण्यवेष्टनम् । शकुनिलुब्धकैः पक्षिवध-जीविभिर्व्याधैः । इदानीमपि अपि शब्दोवनराज्याहिण्डनादीनामसुकरत्वेनैतावत्पर्य-

किलअह्मेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स कहं वि ण करेदि । अज्ज वि से तं एव्व जिन्तअन्तस्स अक्खीसु पभादं आसि । का गदी । जाव णं किदाचारपरिक्कमं पेक्खामि । (इति परिक्रम्यालोक्य च ।) एसो वाणासनहत्थाहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो । होदु । अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं । (इति दण्डकाष्ठमवलम्ब्य स्थितः ।)

(ततः प्रविशति यथानिर्दिष्टपरिवारो राजा ।)

**राजा**—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

granted without hesitation.

---

ह्यः किलास्माखवहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । सांप्रतं नगरगमनस्य कथामपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । का गतिः । यावत्तं कृताचारपरिक्रमं पश्यामि । एष वाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ॥

---

न्तमनुभूतं क्लेशाधिक्यं द्योतयति । गण्डः व्रणः पिटकोमहाव्रणः व्रणस्योपरिव्रणो जातः । अस्माखवहीनेषु अस्मासु पश्चात् स्थितेषु अस्मदसन्निधान इत्यर्थः न निष्कामति नशाम्यति । तामेव चिन्तयत इति । अत्रनिद्राभावकथनेनरात्रौ राज्ञा विदूषकस्याग्रतश्शकुन्तलादर्शनादिकं किञ्चित्प्रसञ्जितमित्यनुसन्धेयम् ॥ कृताचारपरिक्रमम् कृत आचारस्य स्नानादेः परितः क्रमो येन तम् वाणासनं धनुः हस्ते यासां ताभिः वनपुष्पमालाधारिणीभिरित्यनेन मृगयावेषकथनम् । यवनीभिश्शस्त्रधारिणीभिः तदुक्तम् "किराती चामरधरा यवनी शस्त्रधारिणी" इति ।

**काममिति** । प्रिया मदभिलाषविषयभूता शकुन्तला कामं पर्याप्तम् "कामं प्रकामं पर्याप्तम्" इत्यमरः । न सुलभा मुन्यधीनत्वाद्दुष्प्रापा । "ईषद्दु

सुषु कृच्छ्राकृच्छ्रार्थेषु" इति खलू। "न सुदुर्भ्यां केवलाभ्याम्" इति नुम्प्रतिषेधः। अनेन पाक्षिकप्राप्तिसंभावना द्योत्यते । दुर्लभत्वे तद्विषयाभिलाषस्त्यज्यतामित्यत आह । मनस्त्विति । मनस्तु मदीयं चित्तं तु तस्याः शकुन्तलायाः भावदर्शनेन स्वविषयाभिलाषज्ञानेन आयासि प्रयासयुक्तम् । प्रयासकारिणी मनोवृत्तिः प्रेक्षावता प्रयत्नान्निरोद्धव्येत्यत आह । अकृतार्थेऽपीति । मनसिजे मनसि शृङ्गारप्रवर्तकत्वेन जातः मनसिजः "सप्तम्यां जनेर्डः" इति डप्रत्यये "तत्पुरुषे कृतिबहुलम्" इति सप्तम्या अलुक् । तस्मिन् अकृतः अनिर्वर्तितः अर्थः प्रयोजनं येन तथाभूतेऽपि अनिर्वर्तितव्यापारेपि परस्परालिङ्गनाद्यभावेऽपीत्यर्थः । उभयप्रार्थना उभयोः स्त्रीपुंसयोः प्रार्थना मनोरथः । अत्र समासविषये उभशब्दस्थाने उभयशब्दप्रयोग एव साधुरित्यनुसन्धेयम् । यथाह कैयटः—"उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो माभूत् । उभयशब्दस्यैव यथास्यात्- उभयपुत्रइत्यादि भवति" इति रतिं प्रीतिं कुरुते जनयति । आलिङ्गनादिमदनव्यापाराभावेऽपि अन्योन्यानुरागचेष्टादर्शनेन उभावपि निरतिशयमानन्दमनुभवत इत्यर्थः। उक्तं च मालविकाग्निमित्रीये—"परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः" इति । अत्र मन्मथाकृतार्थत्वरूपहेतोर्वैकल्येऽपि रतिरूपकार्योत्पत्तिवर्णनाद्विभावनालङ्कारभेदः । "हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता" इति तल्लक्षणात् । हेतुतावच्छेदकधर्मस्य तत्सम्बन्धस्य वा वैकल्यमेव हि तदर्थः । अस्ति चात्र मन्मथाकृतार्थत्वरूपहेतोर्वैकल्यम् । अत्र मन्मथस्य कृतार्थत्वं नाम नायिकानायकयोः परस्परसम्भाषणादिमात्रप्रयोजकत्वम् । न तु यावत्प्रयोजनप्रयोजकत्वमिति दिक् । अत्र काममित्यस्य "अकामानुमतौ कामम्" इति कोशेन अकामेनापि मयानुमन्तव्यमिति केचित् । तच्चार्थकल्पनं दुष्यन्तस्याकामत्वानुपपत्त्या न चतुरम् । अतः पर्याप्तपर्यायः कामशब्दोऽत्र ग्राह्यः । स च सौलभ्यक्रियाविशेषणम् । एतेन मदभिलाषविषयभूता शकुन्तला पर्याप्तमसुलभेत्यर्थकल्पनया पाक्षिकप्राप्तिसम्भावनाया द्योत्यतापि स्वरसतः सङ्गच्छते । तथा तद्भावदर्शनायासीत्यत्र तस्या भावदर्शनायायासीति व्याचक्षते । तथाविधार्थकल्पने पूर्वं भावविशेषा न दृष्टाः अपि त्वितः परं द्रष्टव्याइति कुतूहलाधिक्यप्रतिपादनेपि पूर्ववाक्येन प्रियादुर्लभत्वे निरूपिते महानायकस्य दुर्लभाद्वस्तुनो निवर्तनीयत्वस्य मनसः कर्तव्यतया तत्र मनः प्रवृत्तिप्रतिपादकस्य मनस्त्वित्यादिवाक्यस्यासङ्गतिः स्यात् । आयासे हेतोर्बलवत्तरस्यानुपन्यासश्च स्यात् । भावदर्शनेन हेतुना आयासीति तृतीयासमासस्याङ्गीकारे आयासे हेतुः स्पष्ट एव । निरूपितं च पूर्वाङ्क एव भावदर्शनम् । "वाचं न मिश्रयति" इत्यादिना । वक्ष्यति च बहुशः । एवं च प्रिया काममसुलभा तर्हि तद्विषयाभिलाषस्त्यज्यतामिति

(स्मितं कृत्वा ।) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते । तथाहि

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
यांत यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥ २ ॥

---

नैन्मनस्तु तद्भावदर्शनेनायासीति पूर्ववाक्यार्थापेक्षयोत्तरवाक्यार्थास्य परस्परमघटमानाविषयत्वेन वैलक्षण्यं स्फुटं प्रतिपादितं भवति । अत एव कविना मनस्त्विति तुशब्दः प्रयुक्तः । अत एव दुर्लभवस्तुविषयकः प्रयत्नो मनसस्त्यज्यतामिति शङ्काया निवारके उत्तरवाक्ये उभयप्रार्थनेत्यस्य सङ्गतिः । अन्यथा स्वविषयकशकुन्तलामनोरथस्यानवगमने उभयप्रार्थनेत्यसंगतमेव स्यादिति स्पष्टमेवेत्यलं विस्तरेण । आर्या वृत्तम् ॥ १ ॥

आत्मनः स्वस्य अभिप्रायेण अभिलाषेण सम्भाविता कल्पिता इष्टजनस्य चित्तवृत्तिः अभिलाषो येन स तथोक्तः आत्माभिप्रायेण स्वाभिप्रायेण मनोगतेन आशयेन सम्भाविता कल्पिता इष्टजनस्य प्रियजनस्य चित्तवृत्तिः मनोरथः येन सः । यथाहमस्यामभिलाषी तद्वदियमपि मय्यभिलाषिणीति सम्भावयन् जनः परिहास्यते ।

स्निग्धमिति । अन्यतोऽपि मत्तोऽन्यत्रापि उदासीने वस्तुन्यपीत्यर्थः । नयने नेत्रे प्रेरयन्त्या प्रेषयन्त्या तया शकुन्तलया स्निग्धं सानुरागं यत् वीक्षितं दृष्टिः । नपुंसके भावे क्तः । तथा विलासादिवेत्यत्र इवशब्दो भिन्नक्रमः । विलासात् आत्मानुरागव्यञ्जकचेष्टाविशेषात् । नितम्बयोर्जघनयोर्गुरुतयेव भारवत्तयेव मन्दं मन्थरं यत् यातं गतिः । मागाः "इण् गतौ" वित्यस्माल्लुङि "इणो गा लुङि" इति गादेशः । "न माङ्योगे" इत्यडागमप्रतिषेधः । मागच्छेति उपरुद्धया निवारितया तया शकुन्तलया यदपि यच्च सखी प्रियंवदा सासूयं सेर्ष्यं यथा तथा उक्ता अभिहिता । तत्र स्थित्यर्थमिति भावः । सर्वं तत् स्निग्धवीक्षणमन्दगमनसेर्ष्यवचनादि । मत्परायणं परं अयनं परायणं आश्रयः "पूर्वपदात्संज्ञायाम्" इति णत्वं "आश्रये तत्पराभीष्टे परायणपदं विदुः" इति शाश्वतः । अहं परायणं यस्य तत्तथोक्तं किल मद्विषयं किल मामेव विषयीकृत्य प्रवृत्तमिति सम्भावयामीत्यर्थः । यदुक्तं सर्वं मत्परायणमिति तदेव द्रढयति—अहो इति । अहो आश्चर्यं कामी कामयमानो जनः स्वतामात्मीयतां पश्यति । नायिकाकृतवीक्षणादेरन्योद्देशेन प्रवृत्तत्वेपि तस्यां

**विदूषकः**—(तथास्थित एव ।) [1]भो वअस्स, ण मे हत्थपाआ पसरन्ति । वाआमेत्तएण विअई हो हि ।

**राजा**—कुतोऽयं गात्रोपघातः ।

**विदूषकः**—[2]कुतो किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि ।

**राजा**—न खल्ववगच्छामि ।

**विदूषकः**—[3]भो वअस्स, जं वेदसो खुज्जलीलं विडम्बेदि तं किं अत्तणो पहावेण, उद णईवेअस्स ।

**राजा**—नदीवेगस्तत्र कारणम् ।

**विदूषकः**—[4]मम वि भवं ।

**राजा**—कथमिव ।

**विदूषकः**—[5]एव्वं राअकज्जाणि उज्झिअ एआरिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखुहिअसंधिबन्धाणं मम गत्ताणं अणीसो ह्मि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं ।

---

१. भो वयस्य, न मे हस्तपादं प्रसरति । वाङ्मात्रेण विजयीभव ।

२. कुतः किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि । ॥ explain.

३. भो वयस्य, यद्वेतसः कुब्जलीलां विडम्बयति तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ।

४. ममापि भवान् ।

५. एवं राजकार्याण्युज्झित्वा एतादृशे आकुलप्रदेशे वनचरवृत्तिना त्वयाभवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षुभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसर्जयितुं मामेकाहमपि तावद्विश्रमितुम् ।

---

स्वाभिप्रायानुरूपचेष्टां परिकल्प्य तत्सर्वमात्मविषयप्रवृत्तं मन्यत इत्यर्थः । स्वभावोक्त्यर्थान्तरन्यासयोस्तिलतण्डुलवत्संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

हस्तपादं हस्तौ च पादौ च प्राण्यङ्गत्वादेकवद्भावः नपुंसकत्वञ्च । वाङ्मात्रेणेति हस्तोत्क्षेपणासामर्थ्यमुक्तम् । गात्रोपघातः अङ्गवैकल्यम् । गात्राणामनीशः

राजा—(स्वगतम्) अयं चवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः ।

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

विदूषकः—(राज्ञो मुखं विलोक्य ।) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि ।[1]

राजा—(सस्मितम् ।) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—चिरंजीअ[2] । (इति गन्तुमिच्छति ।)

राजा—वयस्य, तिष्ठ । सावशेषं मे वचः ।

---

१. अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् ।
२. चिरं जीव ।

---

"अधीगर्थदयेशां कर्मणि" इति षष्ठी । मृगयाविक्लवं मृगयापराङ्मुखं । अरण्येमयारुदितमासीत् मद्वाक्यमरण्यरोदनवन्निरर्थकमासीत् । अनायासे कर्मणि वक्ष्यमाण शकुन्तलाविषयकव्यापारे ॥

न नमयितुमिति । मृगेषु विषये अधिज्यं आरोपितमौर्वीकं आहितः संयोजितः सायकः बाणः यत्र तत्तथोक्तं इदं पुरोवर्ति धनुः कार्मुकं नमयितुं गुणाकर्षणेन प्रह्वीकर्तुं कर्णान्तमाक्रष्टुमितियावत् । न शक्तोऽस्मि । मृगान् विशिनष्टि । सहेति । यैर्मृगैः सह वसतिं एकत्रावस्थानं उपेत्य प्राप्य अन्यथा वनस्थमृगैर्नगरस्थितयुवत्या उपदेशासंभवादिति भावः । प्रियायाः शकुन्तलायाः मुग्धानि स्वभावसुन्दराणि अनधिगतहावभावानीत्यर्थः । "मुग्धः सुन्दरमूढयोः" इति विश्वः । यानि विलोकितानि वीक्षणानि तेषां उपदेशः । अज्ञातज्ञापनमुपदेशः । कृत इव अत्र कृत इवेत्युत्प्रेक्षायाः वाक्यार्थहेतुककाव्यलिङ्गस्य चाङ्गाङ्गिभावलक्षणः सङ्करः । पुष्पिताग्रा वृत्तम् ॥ ३ ॥

**विदूषकः**—आणवेदु[1] भवं ।

**राजा**—विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

**विदूषकः**—किं[2] मोदअखादणे तेण हि अअं सुगहीदोक्खणो ।

**राजा**—यत्र वक्ष्यामि । कः कोऽत्र भोः ।

(प्रविश्य ।)

**दौवारिकः**—(प्रणम्य ।) आणवेदु[3] भट्टा ।

**राजा**—रैवतक, सेनापतिस्तावदाहूयताम् ।

**दौवारिकः**—तँह । (इति निष्क्रम्य सेनापतिना सह पुनःप्रविश्य ।) एसो अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उवसप्पदु अज्जो ।

**सेनापतिः**—(राजानमवलोक्य ।) दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता । तथा हि देवः ।

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।

---

१. आज्ञापयतु भवान् ।
२. किं मोदकखादने । तेन ह्ययं सुगृहीतः क्षणः ।
३. आज्ञापयतु भर्ता ।
४. तथा । एष आज्ञावचनोत्कण्ठो भर्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः ।

---

आज्ञावचनोत्कण्ठः आज्ञाया वचने उत्कण्ठा यस्य सः । अथवा आज्ञाया वचनाय उत्कण्ठः उद्ग्रीवः । दृष्टाः लक्षिताः दोषाः शरीरकार्श्यादयः यस्यां तथाभूतापि अथवादृष्टः दोषः हिंसादिः यस्यां सा प्राणिवधादिदोषैर्दूषितापीति भावः ॥

**अनवरतेति** । देवः स्वामी "देवः सुरे घने राज्ञि" इति हेमचन्द्रः । गिरिचरः पर्वतचरः "चरेष्टः" इत्यधिकरणे उपपदे चरेष्टप्रत्ययः । नागः गज इव प्राणसारं प्राणः बलमेव सारः स्थिरांशः यत्र तथोक्तम् । "प्राणो हृन्मारुते क्लीबे वाच्यलिङ्गोऽनिले बले । पुंलिङ्गः पूरिते वाच्यलिङ्गः, पुंभूम्नि चासुषु ॥" इति मेदिनी । "सारो बले स्थिरांशे च" इत्यमरः । गात्रं बिभर्ति । गात्रमेव विशिनष्टि—

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

(उपेत्य ।) जयतु स्वामी । गृहीतश्वापदमरण्यम् । किमद्यापि स्थीयते ।

**राजा**—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन ।

**सेनापतिः**—(जनान्तिकम् ।) सखे, स्थिरप्रतिबन्धो भव । अहं तावत्स्वामिनश्चित्तवृत्तिमुनवर्तिष्ये । (प्रकाशम् ।) प्रलपत्वेष वैधेयः । ननु प्रभुरेवात्र निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते निकृतिमच्चित्तं भयक्रोधयोः ।

---

अनवरतमिति । अनवरतं अविश्रान्तं धनुर्ज्यायाः शिञ्जिन्याः । अत्र धनुर्ज्येति करिकलभादिवत्प्रयोगः । आस्फालनेन आकर्षणेन क्रूरः कठिनः । "क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्" इति विश्वः । दृढीभावमापन्न इतियावत् । पूर्वः पूर्वभागो यस्य तत्तथोक्तम् । गजपक्षे अनवरतं धनुः प्रियालुद्रुमः तस्य ज्यायां भूमौ प्रदेशे अर्थात्प्रियालुदुमे यदास्फालनं तेन क्रूरपूर्वम् । "धनुः पुमान्प्रियालुद्रौ राशिभेदे शरासने" इति मेदिनी । तथा रवेः सूर्यस्य किरणान् सहिष्णु सहनशीलम् "अलंकृञ्--" इतीष्णुच् । आतपसञ्चारेपि श्रमरहितमित्यर्थः । स्वेदलेशैर्घर्मबिन्दुभिराभिन्नं अस्पृष्टम् । श्रमजयीत्यर्थः । स्वेदैस्तु न मिश्रम् । स्वेदलेशैरपि न संबद्धमिति भावः । अथवा अभिन्नं अपृथक्कृतं युक्तमित्यर्थः । गात्रं स्वेदलेशैरेव युक्तं नतु स्वेदधाराभिरिति भावः । किंच अपचितमपि कृशमपि व्यायतत्वाद्दीर्घत्वात् अलक्ष्यं कृशत्वेनाविभाव्यम् । हस्तिगात्रपक्षेप्येतानि विशेषणानि समानार्थकानि । श्लेषोपमयोरङ्गाङ्गिभावसङ्करः । मालिनी वृत्तम् ॥ ४ ॥

मृगयाया गुणान् दर्शयति—**मेद इति**। वपुः शरीरं मेदसः वसायाः छेदेन अपगमेन कृशं स्थौल्यरहितं उदरं यस्य तत्तथोक्तम् । अत एव लघु भाररहितं "लङ्घिबंह्योर्नलोपश्च" इति कुः नलोपश्च । "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम्" इति मेदिनी । उत्थानस्य उद्योगस्य योग्यं क्षमं अश्वाद्यारोहणव्यवहारार्हं भवति । "उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे" इति मेदिनी । अपि किंच । अत्र अपिशब्दः पूर्ववाक्यसमुच्चये । सत्त्वानां प्राणिनां भयक्रोधयोः भये क्रोधे च सति विकृतिमत् विकारयुक्तं चित्तं लक्ष्यते ज्ञायते। भये सति सत्त्वा-

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्याहि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

विदूषकः—[1]अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो अडविं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि ।

राजा—भद्र सेनापते, आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाभिनन्दामि । अद्य तावत् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । Rumination

---

1. अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवितोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि ।

---

नामीदृशश्चित्तविकारो भवति । क्रोधे च सतीदृश ईत परिज्ञायत इति भावः । तथा चले अस्थिरे लक्ष्ये शरव्ये "लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्" इति मेदिनी । इषवः वाणाः यत् सिध्यन्ति सफलप्रयोगा भवन्ति । अत्र इषव इति बहुवचनेन यादृच्छिकैकवेधो निरस्यते । किन्तु सर्वे बाणाश्चलशरव्यवेधका भवन्तीति द्योत्यते । स च विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । उद्देश्यविधेययोरैक्यमापादयतः सर्वनाम्नोऽन्यतरलिङ्गवत्वस्य न्यायसिद्धत्वात् । यथा "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इति । धन्विनां धानुष्काणामुत्कर्षः । प्रशंसानैपुण्यमितियावत् । अतः मृगयां आखेटकं "परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्" इति वार्तिकात्साधुः । मिथ्याहि मृषैव व्यसनं विपत्करं वदन्ति । जना इति शेषः । "व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले दोषे विपत्तौ निष्फलोद्यमे ॥" इति विश्वः । दृष्टबहुगुणसम्भवान्मृगयाव्यसनत्वेन परिगणयितुं न युज्यत इत्यर्थः । ईदृक् एवंविधः विनोदः आनन्दः कुतः मृगयाभिन्नात्कस्मात्कर्मणः संभवति नान्यस्माद्भवतीति भावः । मृगयाया व्यसनत्वाभावे पूर्ववाक्यत्रयस्य हेतुत्वेनोपादानात्काव्यलिङ्गमलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

नरनासिकालोलुपस्येति । भल्लूकाहि प्रायेणादौ दर्शनपथम्प्राप्तानां मनुष्याणां नासिका उत्प्लुत्य गृह्णन्तीति प्रसिद्धिः ॥ प्रभविष्णव इति "रुच्यर्थानां प्रीयमाण" इति चतुर्थी । उपरुन्धन्ति उपद्रवन्ति ।

गाहन्तामिति । महिषाः शृङ्गैर्विषाणैः मुहुः वारंवारं ताडितं आस्फालितं

विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

सेनापतिः—यत्प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः ।

---

महिषाहिशिरसिदशतोदंशानपवारयितुं शृङ्गैर्जलंमुहुस्ता डयन्तीति स्वभावोक्तिः नियतं पिबन्त्यत्रेति निपानानि उपकूपजलाशयाः "करणाधिकरणयोः" इत्यधिकरणे ल्युट् । तेषां सलिलं जलं गाहन्तामालोडयन्तु । तत्र यथेच्छं विहरन्त्वित्यर्थः । मृगाणां हरिणानां कुलं यूथं छायासु वृक्षच्छायासु बद्धं कृतं कदम्बकं समूहो येन तत्तथोक्तं सत् रोमन्थं उद्गिलितकवलचर्वणं । रोमन्थ इति पृषोदरादित्वात्साधुः । अभ्यस्यतु परिचनोतु । एतावत्पर्यन्तं मृगयाभीतेः पलायनमात्रशरणानां मृगाणां रोमन्थो विस्मृत इवासीत् । इदानीं शिक्षाक्रमेण परिचयदार्ढ्यमावहन्त इव निःशङ्कं मुहुरावर्तयन्त्विति भावः । वराहततिभिः सूकरसमूहैः विस्रब्धं स्वच्छन्दं पल्वले अल्पसरसि । "सानसिपर्णसि–" इत्यौणादिकवलच्प्रत्यये पल्वल इति रूपम् । वराहास्तु बहुजले न प्रविशन्ति किन्तु पङ्कप्रायाल्पजल एवेति पल्वल इत्युक्तम् । मुस्तानां कुरुविन्दानां । "कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्" इत्यमरः । क्षतिः उत्खननं क्रियतां । तथा इदं अस्मद्धनुश्च शिथिलः अवरोपितः ज्याबन्धः मौर्वीबन्धः यस्य तत्तथोक्तं सत् । विश्रान्तिं लभताम् । अव्यापारं तिष्ठत्वित्यर्थः । अत्र विश्रामगित्यपाणिनीयः पाठः "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति वृद्धिप्रतिषेधात् । अत्र तृतीयचरणे काव्यप्रकाशकारैर्दोषप्रकरणे प्रक्रमभङ्गदोष उक्तः । स च "विस्रब्धं कुरुतां वराहविततिर्मुस्ताक्षतिं पल्वले" इति पठित्वा परिहरणीयः । स्वभावोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

**शमेति** । शमः शमु धातो भवि घञ् । "नोदात्तोपदेशस्य" इति वृद्धिनिषेधः । शान्तिरेव प्रधानं मुख्यो गुणः येषां तेषु तपोधनेषु तपस्विषु गूढं अनभिभवावस्थायामप्रकाशम् । दाहो दहनं भावे घञ् । आत्मा स्वभावो यस्य तत् ।

स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

**सेनापतिः**—यदाज्ञापयति स्वामी ।

**विदूषकः**—धंसिदो[1] दे उच्छाहवुत्तन्तो ।

(निष्क्रान्तः सेनापतिः ।)

**राजा**—(परिजनं विलोक्य ।) अपनयन्तु भवन्तो मृगयावेषम् । रैवतक, त्वमपि स्वं नियोगमशून्यं कुरु ।

**परिजनः**—जं[2] देवो आणवेदि । (इति निष्क्रान्तः ।)

**विदूषकः**—कैदं[3] भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि ।

---

१. ध्वंसितस्त उत्साहवृत्तान्तः ।

२. यद्देव आज्ञापयति ।

३. कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां पादपच्छायायांविरललतावितानसनाथआसने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।

---

दाहसमर्थमित्यर्थः । तेजः अस्ति विद्यते । हि यस्मात् ते तपस्विन इति शेषः । स्पर्शे सति अनुकूलाः अदाहकाः । स्पर्शशीतला इत्यर्थः । सूर्यकान्ताः शिलाविशेषा इव अन्यस्य राजादेस्तेजसा बलेन अभिभवात् आक्रमणात् । तिरस्कारादित्यर्थः । सूर्यकान्तपक्षे अन्यस्य सूर्यस्य तेजसः आतपस्य अभितो भवः भवनम् । व्याप्तिरितियावत् । तस्मात् तत् गूढं स्वीयं तेजः वमन्ति उद्गिरन्ति । प्रकटयन्तीत्यर्थः । अत्रवमन्तीत्यश्लीलशङ्का न कार्या । यत्र स्ववाच्ये वमनशब्दः प्रयुज्यते तत्रैव दोषः। प्रकृते तु उद्गिरणसंबन्धात्प्राकट्यं लक्षयन् तस्योपायसहस्रैरप्यप्रतिकार्यत्वमन्यविलक्षणत्वादिधर्मंबोधयति । तदुक्तं काव्यादर्शे—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते ॥" इति । यथा सूर्यकान्ताः स्पर्शशीतला अपि तरणिकिरणसम्पर्केऽग्निमुद्गिरन्ति तथा मुनयः शान्तिगुणावलम्बिनोऽप्यन्यैरभिभवे कृते स्वनिष्ठं ब्रह्मवर्चसं सापराधेषु तेषु प्रयुञ्जते अतस्तपोवनोपरोधः सर्वथा परिहरणीय इति भावः । उपमालंकारः । वृत्तमुपजातिः ॥ ७ ॥

राजा—गच्छाग्रतः।

विदूषकः—ऐदु भवं।

(इत्युभौ परिक्रम्योपविष्टौ।)

राजा—माढव्य, अनवाप्तचक्षुःफलोऽसि। येन त्वया दर्शनीयं न दृष्टम्।

विदूषकः—णं भव अग्गदो मे वट्टदि।

राजा— सर्वः कान्तमात्मीयं पश्यति। अहं तु तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि।

विदूषकः—(स्वगतम्।) होदु। से अवसरं ण दाइस्सं। (प्रकाशम्।) भो वअस्स, ते तावसकण्णआ अब्भत्थणीआ दीसदि।

राजा—सखे, न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते।

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि पतितं च्युतमिव नवमालिकाकुसुमम्॥ ८॥

---

१. एतु भवान्।

२. ननु भवानग्रतो मे वर्तते।

३. भवतु। अस्यावसरं न दास्ये। भो वयस्य, ते तापसकन्यकाभ्यर्थनीया दृश्यते।

---

सुरेति। मुनेः कण्वस्य अपत्यं कन्यात्वेनाभिमन्यमाना शकुन्तला सुरयुवतिर्मेनका तत्सम्भवं तद्गर्भसम्भूता किल। किलेति प्रसिद्धौ। तया मेनकया उज्झितं त्यक्ता ततोऽधिगतं प्राप्ता कण्वेनेति शेषः। "पूर्वकालैक—" इत्यादिना समासः। अपत्यशब्दापेक्षया सर्वत्र नपुंसकलिङ्गनिर्देशः। तत्रोपमामाह—अर्कस्येति। च्युतं नवमालिकातो गलितं स्थापनं हि सन्निवेशविशेषेण भवतीति च्युतमित्युक्तं। अर्कस्योपरि पतितं अर्केण सम्बद्धं नवमालिकाकुसुममिव। अत्र कण्वस्योपमानमर्कः तेन शकुन्तलायास्तदीयत्वकल्पनमत्यन्तासम्भवनीयमिति व्यज्यते। सुरयुवतेरुपमानं नवमालिका तेनातिसुकुमारकुसुमोत्पादनयोग्यता। अपत्यस्य कुसुमम्। अनेन पुष्पोपमानेन शकुन्तलाशरीरस्यातिसौकुमार्यं सूचितम्। अधिगमस्य पतनम्। अनेन नवमालिकाकुसुमस्य यथा अर्कवृक्षस्योपरि दैवात्पतनं तद्वच्छकुन्तलायाः

**विदूषकः**—(विहस्य ।) जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिलीए अहिलासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा ।

**राजा**—न तावदेनां पश्यसि येनैवमवादीः ।

**विदूषकः**—तं क्खु रमणिज्जं जं भवदो वि विह्मअं उप्पादेदि ।

**राजा**—वयस्य, किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन विधिना मनसा कृता नु ।

---

१. यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ।

२. तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ।

---

मेनकासंभवत्वेपि काश्यपनिकटावस्थानामिति भावः । उज्झनस्योपमानं च्यवनम् । उपमालंकारः । आर्या वृत्तम् ॥ ८ ॥

पिण्डखर्जूरैः खर्जूरविशेषैः उद्वेजितस्य वैरस्यं प्रापितस्यतिंत्रिण्यां चिञ्चाफले । अनवाप्तचक्षुः फलोसि अनधिगतनयनप्रयोजनोसि । ननुभवानिति । यतो दर्शनीयस्त्वं दृश्यसे तस्मादनवाप्तचक्षुः फलोस्सीति भावः ॥ आश्रमललामभूतां तपोवनालङ्कारभूताम् । भवतोपि विस्मयमुत्पादयति । अपिशब्देनास्मदादीनां विस्मयोत्पादने किं वक्तव्यमिति भावः । परिहार्ये तपस्विकन्यात्वेनपरिणयायोग्ये ।

चित्र इति । विधिना ब्रह्मणा कर्त्रा चित्रे आलेख्ये निवेश्य निरवद्यं सम्यग्लिखित्वा । तूलिकयोन्मील्येत्यर्थः परिकल्पितः संयोजितः प्राणयोगः प्राणानां संबन्धो यस्याःसा तथोक्तानु । चित्रे हि यथा वस्तु मनोहरं भवति तथा पुनः पुनः प्रमृज्य लिखितुं शक्यत इति चित्र इत्युक्तम् । सर्वाङ्गानवद्यमिदं शकुन्तलावपुः प्रथमं ब्रह्मणा तूलिकया स्वमनोरथानुरूपमुन्मीलितमनन्तरं प्राणैर्योजितम् नोचेत्कथमेतादृशं निर्जितरतिलावण्यं रूपंसम्भवेदित्यर्थः । शकुन्तलावपुर्निर्माणविषये चित्रकर्मापि न पर्याप्तमिति मत्वा ततोप्युत्कृष्टेनोपकरणेन तन्निर्माणप्रकारमाह—रूपोच्चयेनेति । रूपाणां उच्चयः समुदायः चन्द्रसरोजाद्युत्कृष्टवस्तुवर्तिकान्तिसमूहः तेनोपादानकारणेन मनसा चित्तेन करणेन करतलस्पर्शक्लेशितेभ्यश्चित्रनिर्मितेभ्यश्चांगेभ्यो मनोनिर्मितानामंगानां कान्त्युत्कर्षो भवतीति मनसेत्युक्तम् । कृतानु-

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

विदूषकः—जइ एव्वं पच्चादेसो दाणिं रूववदीणं ।

राजा—इदं च मे मनसि वर्तते ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।

१. यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् ।

स्रष्टा किम् । अनेनेदं शकुन्तलावपुस्त्रिभुवनवर्तिविशिष्टवस्तुसौन्दर्यसारमादाय दुर्लभवहुकोडीकरणनिपुणतया सर्वसाधनेभ्यो विशिष्टतमेन मनसैव सृष्टमिति प्रतिभातीत्यर्थः । एवंविधनिर्माणवितर्के कारणमाह । स्त्रीरत्नेति । धातुर्ब्रह्मणः विभुत्वंनिर्माणकौशलं तस्याः वपुश्चानुचिन्त्य स्थितवतो मे सा अपरा अन्यादृशी । जगद्विलक्षणेति भावः । स्त्रीरत्नसृष्टिः । "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इत्युक्तत्वात् । उत्कृष्टा स्त्रीसृष्टिः इति प्रतिभाति । रम्भादिसृष्ट्यपेक्षयातिनिपुणा जगद्विलक्षणेयं सृष्टिरिति भावः । अत्र पूर्वार्धे शकुन्तलावपुषश्चित्रादिनिर्मितिवितर्कात्सन्देहालंकारः । तथाविधवितर्के प्रत्युत्तरार्धस्य हेतुत्वेनोपादानात्काव्यलिंगम् । वपुर्जगद्विलक्षणसृष्टिरित्यभेदे भेदरूपातिशयोक्तिश्च । अतिशयोक्तिकाव्यलिंगयोरंगांगिभावलक्षणः संकरः । स च पूर्वार्धस्थितसंदेहालंकारेण सङ्कीर्यते ॥ ९ ॥

यद्येवमिति । प्रत्यादेशः निराकरणम् । शकुन्तलया रूपवत्यो निराकृता इति भावः ।

अनाघ्रातमिति । तद्रूपं तस्याः शकुन्तलाया रूपं आकृतिः अनाघ्रातं अकृतगन्धग्रहं पुष्पं कुसुममिव अनघं मनोज्ञम् । "अनघो निर्मलापापमनज्ञेषु च भेद्यवत्" इति विश्वः । अनेन सौरभवाहुल्यं सूच्यते । कररुहैः रोहन्तीति रुहाः "इगुपध—"इति कः करे रुहाः तैः । करे रोहन्तीति कररुहा इत्युपपदसमासविग्रहोऽसाधुः "इगुपध–"इत्यादिना कप्रत्ययस्यानुपपद एव विहितत्वात् अपि तु सप्तम्यन्तकरशब्दस्य "इगुपध–" इत्यादिकप्रत्ययान्तरुहशब्देन सह "संज्ञायाम्" इति सूत्रेण नित्यः सप्तमीसमासः । अलूनं अच्छिन्नं । "ल्वादिभ्यश्च" इति निष्ठातस्य नकारः । किसलयमिव पल्लव इव अनघं अकठोरम् । कोमलर्मितयावत् । अनेनावयवसौकुमार्यं व्यज्यते । अनाविद्धं अनवाप्तवेधदोषं अथवा अकुटिलं "आविद्धं कुटिलं भुग्नम्" इत्यमरः । कुटिलस्य दुष्टत्वादिति भावः । रत्नमिव अनघं दोषस्पर्शशून्यम् । अनेन का-

अखण्डं पुण्यानां फलमिव च तद्रूपनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

विदूषकः—तेणं हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स आरण्णअस्स हत्थे पडिस्सदि ।

राजा—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

विदूषकः—अत्तभवन्तं अन्तरेण कीदिसो से दिट्ठिराओ ।

राजा—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

१. तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्यारण्यकस्य हस्ते पतिष्यति ।

२. अत्र भवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ।

न्तिमत्त्वं व्यज्यते । तथा अनास्वादितः रसनया अननुभूतः रसः यस्य तत्तथोक्तं नवं मधु क्षौद्रमिव अनघं अनवद्यं । हृद्यमितियावत् । केचिन्मधु मद्यमिति व्याचक्षते तन्न । तथा सति नवमिति विशेषणं न स्यात् । पुराणस्यैव तस्योत्तमत्वात् । उक्तं चानेनैव कविना रघुवंशे "पुराणशीधुं नवपाटलं च" इति । अनेनोपभोग्यत्वं सूच्यते । किंच पुण्यानां सुकृतानामखण्डं पूर्णं फलमिव अखण्डत्वविशेषणेनापरिमितसुकृतातिशयवत एव तस्याः लाभः नत्वल्पसुकृतिन इति ध्वन्यते । अनघं दुःखस्पर्शशून्यम् । अनेनात्यन्तस्पृहणीयत्वमुक्तम् । इह एतद्रूपविषये विधिः ब्रह्मा कं भोक्तारं समुपस्थास्यति घटयिष्यति । अन्तर्भावितण्यर्थोऽयं । इति न जाने । अथवा इह जगति विधिः शकुन्तलारूपं भागधेयं कं भोक्तारं समुपस्थास्यति उपगमिष्यति इति न जाने । मालोपमालंकारः । शिखरिणीवृत्तम् ॥ १० ॥

परवतीखलु तत्र भवती । कामिनीरत्नभूतत्वात्तत्रभवतीति पूज्यत्वमुक्तम् । अत्रभवन्तमन्तरेण । अत्रभवन्तमुद्दिश्य "अन्तरान्तरेण युक्त" इति द्वितीया । दृष्टिरागः चक्षुः प्रीतिः । अनुरागः । इति भावः । पथिसाधुपाथेयम् सम्बलं गृहीतं पाथेयं येन स तथोक्तो भव शकुन्तलासमागमायसज्जोभवेत्यर्थः । सकृदपि एकदिनमपि । सिद्धार्थाविति । सिद्धार्थौ कृतार्थौ निष्पन्नप्रयोजनावित्यर्थः आश्रमे राज्ञोवस्थानादिति भावः ।

अभिमुखे मयि संहृतमीक्षणं
हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

विदूषकः—किं णु क्खु सा दिट्ठमेत्तस्स तुह अङ्कं समारोहदि ।

राजा—सखीभ्यां मिथः प्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावस्तत्रभवत्या । तथाहि ।

दर्भांकुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

---

२. किं नु खलु सा दृष्टमात्रस्य तवाङ्कं समारोहति ।

---

**अभिमुख** इति । मयि अभिमुखे सम्मुखे सति ईक्षितं दर्शनं संहृतं लज्जया निवर्तितम् । अनेन यद्यपि तया धाष्ट्र्याभावात्सम्मुखदर्शनं न कृतं तथापि स्वस्य दर्शनात्प्राक्तया स्वयं दृष्ट इति द्योत्यते । हसितं "विकासितकपोलान्तमुत्फुल्लामललोचनम् । किंचिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः" इत्युक्तलक्षणं अन्यनिमित्तेन अनुरागादितरेणैव निमित्तेन कारणेन कृतः उदयः आविर्भावः यस्य तत् तथोक्तम् । सम्मुखहासे सति सख्याः स्वस्य राजविषयकानुरागाभिव्यक्तिर्भविष्यतीति भियान्यन्निमित्तीकृत्य हसितम् । तेन हासस्य स्वविषयकानुरागजनितत्वं सूच्यते । अतः अस्मात्कारणात् विनयेन शालीनतया वारिता प्रतिरुद्धा वृत्तिः प्रसरः यस्य स तथोक्तः मदनः मन्मथः न विवृतः न प्रकटितः सम्मुखदर्शनाभावात्सम्यङ्नप्रकाशितः न च संवृतः न निगूहितः । हासस्य व्याजेनाविष्करणान्न प्रच्छादितः ॥ द्रुतविलम्बितं वृत्तम् ॥ ११ ॥

**दर्भेति** । तन्वी कृशाङ्गी शकुन्तलाकतिचिदेव द्वित्राण्येव "किमस्संख्यापरिमाणे डतिच" इति डत्यन्तः । "डतिच" इति सूत्रेण कतिशब्दस्य षट्संज्ञा "षड्भ्यो लुक्" इति शसो लुक् । पदानि गत्वा अकाण्डे अनवसरे । अकस्मादेवेत्यर्थः । "काण्डः स्तम्बे तरुस्कन्धे वाणेऽवसरनीरयोः । कुत्सिते वृक्षभिन्नाडी-

विदूषकः—तेण्णं हि गहीदपाहेओ होहि । किदं तुए दाणिं तवोवणं उववणं त्ति पेक्खामि ।

राजा—सखे, तपस्विभिः कैश्चित्परिज्ञातोऽसि चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः ।

विदूषकः—को अवरो अवदेसो तुम राआणं । णीवारच्छट्ठभाअं आरण्णआ अह्माणं अवहरन्तु त्ति ।

राजा—मूर्ख, अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम् । पश्य ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

१. तेन हि गृहीतपाथेयो भव । कृतं त्वयेदानीं तपोवनमुपवनमिति पश्यामि ।
२. कोऽपरोऽपदेशस्तव राज्ञः । नीवारषष्ठभागमारण्यका अस्माकमुपहरन्त्विति ।

वन्ये रहसि न स्त्रियाम्" इति मेदिनी । दर्भाङ्कुरेण चरणः पादः क्षतः खण्डितः आविद्ध इति स्थिता न तु दर्भेण । अङ्कुरस्यैवादृश्यमानतया कण्टकवद्वेधे व्याजसम्भवात् । अतः दर्भाङ्कुरावेधेऽपि पादलग्नदर्भाङ्कुरोद्धरणव्याजेन स्थितेत्यर्थः । तथा द्रुमाणां शाखासु असक्तमपि अलग्नमपि वल्कलं परिधानीयतरुत्वचं विमोचयन्ती विवृत्तवदना मां विलोकयितुं परावृत्तमुखी चासीत् । शाखास्विति बहुवचनेन विवृत्तवदनात्वं युक्तं तेन चिरावस्थाने कारणं व्यज्यते । वसन्ततिलकं वृत्तम् ॥

यदिति । हि यस्मादिति पूर्ववाक्येनान्वयः । नृपाणां राज्ञां वर्णेभ्यो ब्राह्मणादिभ्यः यत्फलं उत्तिष्ठति उत्पद्यते तत् क्षयि व्ययादिना क्षयशीलम् । आरण्यकास्तापसाः । "अरण्यान्मनुष्ये" इति वुल् प्रत्ययः । नः अस्माकं अक्षय्यं अप्रत्यक्षत्वाद्व्ययादेरशक्यतया नाशरहितं "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् क्षय्यमितिरूपं साधु । षड्भागं षष्ठभागम् । संख्याशब्दस्य वृत्तिविषये पुरणार्थत्वं शतांशवत् । ददति प्रयच्छन्ति । चातुर्वर्ण्यरक्षणाद्राज्ञः नश्वररत्नाद्युत्कृष्टपदार्थलाभ एव भवति तापसरक्षणेतु प्रयत्नसहस्रैरप्यविनाशितपःषष्ठभागलाभः । अतोऽत्रैव स्थित्वा तपोधनरक्षा कर्तव्येत्यर्थः ॥ १३ ॥

(नेपथ्ये)

हन्त, सिद्धार्थौ स्वः ।

राजा—(कर्णं दत्वा ।) अये, धीरप्रशान्तस्वरः । तपस्विभिर्भवितव्यम् ।

(प्रविश्य ।)

दौवारिकः—जेदु[1] भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा ।

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—एसो[2] पवेसेमि । (इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य ।) इदो इदो भवन्ता ।

(उभौ राजानं विलोकयतः ।)

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवोपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि । कुतः ।

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।

---

१. जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ ।
२. एष प्रवेशयामि । इत इतो भवन्तौ ।

---

अधीति ॥ अमुनापि दुष्यन्तेनापि सर्वभोग्ये सर्वेषां ब्रह्मचारिप्रमुखानां आश्रमिणां भोग्ये भोगार्हे आश्रमे । सर्वश्रेष्ठे गृहस्थाश्रम इत्यर्थः । गृहस्थाश्रमो हि सर्वेषामाश्रमाणां श्रेष्ठः आधारभूतश्च । यथाह मनुः—"सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि" इति । वसतिः स्थितिः अध्याक्रान्ता स्वीकृता । मुनिपक्षे सर्वैर्ब्रह्मचारिभिः भोग्ये पाठार्थमाश्रयणीये यद्वा सर्वेषां प्राणिनाम् । तिर्यग्जन्तूनामपीति भावः । भोग्ये उपभोगार्हे आश्रमे धर्माचरणस्थाने वसतिः स्थानं अध्याक्रान्ता स्वीकृता "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियां" इति मेदिनी । रक्षायोगात् प्रजापरिपालनात् अयमपि दुष्यन्तोऽपि प्रत्यहं प्रतिदिनं तपः षष्ठांशरूपं सुकृतविशेषं सञ्चिनोति संगृह्णाति उक्तं चात्रैव—"तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः" इति । किंच याज्ञ-

अस्यापि द्यां स्पृशति वशिनश्चारणद्वंद्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

द्वितीयः—गौतम, अयं स वलभित्सखो दुष्यन्तः ।

प्रथमः—अथ किम् ।

द्वितीयः—तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवतयो वद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

---

वलभिदः इन्द्रस्यसखा वलभित्सखः "राजाहस्सखिभ्यश्च" इति समासान्त ष्टच् । अथकिमित्यङ्गीकारे ।

वल्क्योऽपि—"पुण्यात् षड्भागमादत्ते न्यायेन परिपालयन् । सर्वदानाधिकं तस्मात्प्रजानां परिपालनम्" इति । मुनिपक्षे रक्षार्थं शरीररक्षार्थं योगः अष्टाङ्गरूपस्तन्निमित्तं तपश्चान्द्रायणादि सञ्चिनोति करोति तथा वशिनः जितेन्द्रियस्यास्य दुष्यन्तस्यापि केवलं राजपूर्वः राजशब्दः पूर्वो यस्य सः राजोपपदमात्रभिन्नः । मुनिरिति पुण्यः पुण्यजनकः शब्दः । चारयन्ति देशान्तरेषु कीर्तिं प्रचारयन्तीति चारणाः देवयोनिविशेषाः कुशीलवाख्यनटविशेषा वा । तद्द्वन्द्वेन स्त्रीपुंसाभ्यां गीतः वर्णितः सन् द्यां स्वर्गं स्पृशति आश्रयते । अत्र श्लेषानुप्राणितो व्यतिरेक इति तयोरङ्गाङ्गिभावेन सङ्करः । मन्दाक्रान्ता वृत्तम् ॥ १४ ॥

नैतदिति ॥ नगरपरिघः पुरार्गला तद्वत्प्रांशू दीर्घौ बाहू भुजौ यस्य सः । नगरपदेनात्यन्तदैर्घ्यं सूचितम् । एकः अद्वितीयः अयं दुष्यन्तः उदधिरेव श्यामा नीलवर्णा सीमा यस्यास्तां अथवा उदधिना श्यामा सीमा यस्यास्ताम् । अत्र "डाबुभाभ्यां" इति वैकल्पिकडापाऽऽकारान्तस्सीमाशब्दस्समासघटक इति ज्ञेयम् । कृत्स्नां समग्रां भुवं भुनक्ति पालयतीति यत् तदेतत् चित्रं आश्चर्यं न । भुनक्तीति "भुजोनवने" इत्यात्मनेपदविधायकसूत्रे अनवन इति पर्युदासात् परस्मैपदम् । हि यस्मात् दैत्यैः असुरैः बद्धं चिरविरूढं वैरं विद्वेषो यासां तास्तथोक्ताः सुरयुवतयः देवस्त्रियः । युवतिगहणं तासामतिभीरुत्वाद्बन्दीदुःखाद्यनुभवाच्च । तस्य अधिज्ये आरोपितगुणे धनुषि पुरुहूतस्य इन्द्रस्येदं पौरुहूतं

**उभौ**—(उपगम्य ।) विजयस्व राजन् ।

**राजा**—(आसानादुत्थाय ।) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते । (इति फलान्युपहरतः ।)

**राजा**—(सप्रणामं परिगृह्य ।) आज्ञापयितुमिच्छामि ।

**उभौ**—विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

**राजा**—किमाज्ञापयन्ति ।

**उभौ**—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

**राजा**—अनुगृहीतोस्मि ।

**विदूषकः**—(अपवार्य ।) एसा दाणिं अणुऊलाते अब्भत्थणा ।

**राजा**—(स्मितं कृत्वा ।) रैवतक, मद्वचनादुच्यतां सारथिः सबाणासनं रथमुपस्थापयेति ।

**दौवारिकः**—जं देवो आणवेदि । (इति निष्क्रान्तः ।)

**उभौ**—(सहर्षम् ।)

---

१. एषेदानीमनुकूला तेऽभ्यर्थना ।

२ यद्देव आज्ञापयति ।

---

तस्मिन् माहेन्द्रे वज्रे च । अस्य च पश्चाद्वचनाद्रौणत्वं व्यज्यते । विजयं आशंसन्ते प्रार्थयन्ति । "शसि इच्छायां" इत्यस्येदितो रूपमिदम् । अनेनेन्द्रपरिपालितस्वर्गलोकस्याप्युपद्रववाहुल्यमस्ति दुष्यन्तपरिपालितभूलोकस्य वाधा नास्तीति ध्वन्यते । अत्र पूर्ववाक्यं प्रत्युत्तरवाक्यस्य हिशब्देन हेतुत्वेनोपादानात्काव्यलिङ्गमलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १५ ॥

विजयस्व "विपराभ्यांजे" रित्यात्मनेपदम् । अश्रमसदांविदितः "मतिबुद्धी" त्यादिनाक्तः "क्तस्यचवर्तमान" इति षष्ठी । इष्टिविघ्नम् यज्ञव्याघातम् । कतिपयरात्रम् "अह स्सर्वैकदेश" इत्यादिना रात्रिशब्दस्य समासान्तोऽप्रत्यतः ।

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥

राजा—(सप्रणामम्) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत-एव ।

उभौ—विजयस्व ।(इति निष्क्रान्तौ ।)

राजा—माढव्य, अप्यस्ति शकुन्तलादर्शने कुतूहलम् ।

विदूषकः—²पढमं सपरिवाहं आसि । दाणिं रक्खसवुत्तन्तेण-विन्दूवि णावसेसिदो ।

राजा—मा भैषीः ननु मत्समीपे वर्तिष्यसे ।

विदूषकः—³एस रक्खसादो रक्खिदो ह्मि ।

(प्रविश्य ।)

दौवारिकः—⁴सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो ।

राजा—(सादरम् ।) किमम्बाभिः प्रेषितः ।

दौवारिकः—¹अहइं ।

---

२. प्रथम सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः ।
३. एष राक्षसाद्रक्षितोऽस्मि
४. सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।
१. अथ किम् ।

---

अनुकारिणीति ॥ पूर्वेषां पुरुप्रभृतीनां राज्ञाम् । कर्मणि षष्ठी । अनुकारिणि सदृशे अनेनैतद्वंश्याः सर्वेऽपि शूरा इति व्यज्यते । त्वयि इदं अस्मदुक्ताङ्गीकरणं युक्तरूपं अतिशयेनानुरूपम् "प्रशंसायां रूपप्प्रत्ययः" । खलु यस्मात् "खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने । वीप्सामाननिषेधेषु पूरणे पदवाक्ययोः" इति मेदिनी । पौरवाः पुरुवंशोद्भवाः राजानः आपन्ना आपत्प्राप्ताः तेषामभयान्येव अभयदानान्येव सत्राणि यज्ञास्तेषु दीक्षिताः धृतव्रताः । अत्र हेत्वर्थकेन खलुशब्देन पूर्वार्धे प्रत्युत्तरार्धस्य हेतुत्वेनोपादानात्काव्यलिंगमलङ्कारः ॥

राजा—ननु प्रवेश्यताम् ।

दौवारिकः—[1]तह । (इति निष्क्रम्य करभकेण सह प्रविश्य ।) एसो भट्टा । उवसप्प ।

करभः—[2]जेदु भट्टा । देवी आणवेदि । आआमिणि चउत्थदिअहे पउत्तपारणो मे उववासो भविस्सदि । तहिं दीहाउणा अवस्सं संणिहिदेण होदव्वं त्ति ।

राजा—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् किमत्र प्रतिविधेयम् ।

विदूषकः—[3]तिसंकू विअ अन्तराले चिट्ठ ।

राजा—सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहं यथा ॥ १७ ॥

---

१. तथा । एष भर्ता । उपसर्प ।

२. जयतु भर्ता । देव्याज्ञापयति । आगामिनि चतुर्थदिवसे प्रवृत्तपारणो म उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संनिहितेन भवितव्यमिति ।

३. त्रिशङ्कुरिवान्तराले तिष्ठ ।

---

त्रिशङ्कुः इक्ष्वाकुवंशजः कश्चिद्राजा ।

कृत्ययोरिति ॥ कृत्ययोः आश्रमपालनमातृसम्भावनरूपकार्ययोः भिन्नौ भेदितौ देशौ ययोस्तौ तथोक्तत्वात् । भिन्नाधिकरणभूमिकत्वादित्यर्थः । मे मम मनः पुरः अग्रे शैले प्रतिहतं स्रोतोवहम् । वहतीति वहा । पचाद्यच् । स्रोतसोवहेति षष्ठीसमासः । स्रोतोवहायाः नद्याः इदं "तस्येदम्" इत्यण् । स्रोतः प्रवाह इव द्वैधीभवति । संदिग्धे मनसो द्वैधीभवनं नामैकत्रापर्यवसानम् । नदीपक्षे एकमप्युभयतोगामि भवति । उभयोरप्यनतिक्रमणीयत्वान्मनो न निश्चयमधिगच्छतीत्यर्थः । द्वैधीभवतीति पदद्वयमेव । समासस्याविधानेनैकपदत्वस्यासंभवात् । द्वैधीभूत इत्यादित्वेकमेव पदम् । तत्र "कुगतिप्रादयः" इति समासविधानात् । "ऊर्यादिच्विडाचश्च" इति च्व्यन्तस्य गतिसंज्ञकत्वात् । "कुगतिप्रादयः" इत्यत्र गतिरिति योगं विभज्य "उपपदमतिङ्" इति सूत्रादातिङित्यपकृष्य गतिसंज्ञकं सुवन्तं

(विचिन्त्य ।) सखे, त्वमस्माभिः पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्त्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

विदूषकः—[1]णं क्खु मं रक्खोभीरुअं णणेसि ।

राजा—(सस्मितम् ।) कथमेतद्भवति संभाव्यते ।

विदूषकः—[2]तेणं हि जह राआणुएण गन्तव्वं तह गच्छामि ।

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

विदूषकः—(सगर्वम् ।) [3]तेणं हि जुवराओ ह्मि दाणिं संवुत्तो ।

राजा—(स्वगतम् ।) चपलोऽयं वटुः । कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एनमेवं वक्ष्ये । (विदूषकं हस्ते गृहीत्वा प्रकाशम्) वयस्य, ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य ।

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः ।

---

१. ननु खलु मां रक्षोभीरुकं गणयसि ।
२. तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि ।
३. तेन ही युवराजोऽस्मीदानीं संवृत्तः ।

---

विदूषकं प्रत्याययितुं तापसकन्यकायामित्युक्तिः ।

शब्दस्वरूपमतिङन्तेन समर्थेन समस्यत इत्यर्थाङ्गीकारात् द्वैधीभवतीत्यत्र भवतीत्यस्य तिङन्तत्वान्नानेन च्व्यन्तस्य समासः । द्वैधीभूत इत्यादौ तु भूत इति क्तान्तस्य अतिङन्तत्वेन नित्यसमासः अतः द्वैधीत्येतत् च्विप्रत्ययान्तमव्ययमिति ज्ञेयम् । उपमालंकारः ॥ १७ ॥

क्वेति । वयं क्व । वयमित्यर्थान्तरसंक्रमितवाच्यं । तेनात्मनः वक्ष्यमाणारण्यकजनप्रतियोगितया कामकलाकुशलत्वं नागरिकत्वं च व्यज्यते । परोक्षमक्ष्णोः परस्मिन्देशे वर्तमानः अदृग्गोचरः मन्मथो यस्य सः । शरदादिषु "प्रतिपरसमनुभ्यो ऽक्ष्णः" इति पाठात् समासान्तष्टच् । अत एव समासान्तविधानसामर्थ्यादव्ययीभावः

परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥ १८ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीमहाकविकालिदासकृतावभिज्ञानशाकुन्तले द्वितीयोऽङ्कः ।

---

"परोक्षे लिट्" इति निपातनात्परशब्दस्यौकारादेशः । कामकलानभिज्ञ इत्यर्थः । मृगशावैः समं हरिणपोतैः सह एधितपदार्थसमर्थनार्थं शावपदम् । एधितः वर्धितः जनः शकुन्तला । जनपदेन लोकवृत्तान्तानभिज्ञत्वं व्यज्यते । क्व कुत्र न कदाचिदप्यनयोः परस्परानुरागः सम्भवेदित्यर्थः । अत्र नागरिकानागरिकयोः अत्यन्तासम्भावितत्वात द्वौ क्वौ प्रयुक्तौ । तदुक्तम्—"अत्यन्तासम्भावितार्थे द्वौ क्वौ प्रयुज्येते" इति । तर्हि चित्ते निवेश्येत्यादिभिः कथं शकुन्तलारूपं वर्णितमित्याह—पारहीसेति । हे सखे, अनेन मित्रत्वात्समुचितानुचितादिकं वक्तुं शक्यत इति द्योत्यते । परिहासेन विविधं जल्पितं वहु वर्णितं तद्वचः "चित्रे निवेश्य" "अनाघ्रातं पुष्पम्" इत्यादि मद्वर्णनं परमार्थेन तत्वेन न गृह्यतां नाङ्गीक्रियतां । अत्र पूर्वार्धे विषमालङ्कारः सहोक्तिश्च । वियोगिनी वृत्तम् ॥ १८ ॥

इति श्रीदुग्धापगादक्षिणतीरस्थितविरिञ्चिपुराभिजन-
श्रीरामसुधीवरतनूभवशङ्करविरचिताया-
मभिज्ञानशाकुन्तलव्याख्यायां विद्व-
न्मनोरमाख्यायां द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

(ततः प्रविशति कुशानादाय यजमानशिष्यः ।)

**शिष्यः**—अहो महानुभावः पार्थिवो दुष्यन्तः यत्प्रविष्टमात्र एवाश्रमं तत्रभवति राजनि निरुपद्रवानि नः कर्माणि संवृत्तानि ।

> का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
> हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

यावदिमान्वेदिसंस्तारणार्थं दर्भानृत्विग्भ्य उपनयामि (परिक्रम्यावलोक्य च । आकाशे ।) प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । (आकर्ण्य ।) किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्था

---

**का कथेति** । हि यस्मात् सः दुष्यन्तः धनुषः हुङ्कारेणेव हुमिति शब्देनेव स्थितेन ज्याशब्देनैव मौर्वीध्वनिनैव विहन्यन्ते एभिः कार्यसिद्धिरिति विघ्नाः॥ घञर्थे कविधानमिति कप्रत्ययः विघ्नान् कर्मोपप्लावकान् अपोहति निरस्यति । बाणस्य सन्धानं धनुष्यारोपणं तस्मिन्सति का कथा का वार्ता । विघ्नानामिति शेषः। धनुर्ज्याशब्देनैव विघ्नान्निराकर्तुरस्य कर्मोपप्लावकवार्तैव न स्यादिति भावः । अनेनानायासेनारिनिबर्हणं ध्वनितम् । अत्र ज्याशब्दस्य हुङ्कारत्वेन सम्भावनादुत्प्रेक्षालङ्कारः । का कथेत्यर्थापत्तिश्च ॥ १ ॥

स्वागमनप्रयोजनं निवेदयति यावदिमानिति । उशीरानुलेपनं नलदांगरागः । आतपलङ्घनात् सूर्यकिरणाभिघातात् । शरीरसन्तापनिर्वापणाय शरीरसन्तापोपशमाय। तर्हि तथाचेत् । उपक्रम्यताम् चिकित्स्यताम् उच्छ्वसितम् जीवितम् प्रणभूतेति यावत् वैतानिकम् यज्ञियं । गौतमी कण्वभगिनी । अत्राकाश इत्यारभ्या प्रविष्टया-प्रियंवदयायवनिकान्तः प्रतिपादितोऽर्थ आकाशभाषितमित्युच्यते । तदुक्तम् । "किं ब्रवीष्येवमित्यादिविनापात्रं ब्रवीतियत् । श्रुत्वेवानुक्तमप्येक स्तत्स्यादाकाशभाषितम् ॥"—इति विष्कम्भलक्षणं यथा—"वृत्तवर्तिष्यमाथानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्यदर्शितः । मध्येनमध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धःस्यात्सतु सङ्कीर्णो नीचमध्यम कल्पितः ॥" इति अत्र-दुष्यन्तस्याश्रमाभ्यन्तरागमनं कृततपस्विकार्यत्वेन कृतार्थत्वं चेति भूतार्थकथनं

शकुन्तला। तस्याः शरीरसन्तापनिर्वापणायेति। तर्हि त्वरितं गम्यताम्। सखि, सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम्। अहमपि ताव द्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि। (इति निष्क्रान्तः।)

## शुद्धविष्कम्भः।

(ततः प्रविशति कामयमानावस्थो राजा।)

**राजा**—(निःश्वस्य।)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
अलमस्मि ततो हृदयं तथापि नेनं निवर्तयितुम्॥ २॥

(मदनबाधां निरूप्य।) भगवन्कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्या मतिसंधीयते कामिजनसार्थः। कुतः।

---

शकुन्तलाया आतपलङ्घनव्याजेन विरहवस्थाकथनंचेतिवर्तिष्यमाणार्थांशसूचनमितिज्ञेयम्।

**जान इति**। तपसो वीर्यं प्रभावं जाने "वीर्यं तेजःप्रभावयोः। शुक्रे शक्तौ च" इत्यमरमालायाम्। अनेन बलादपहरणे सर्वानर्थकारी काश्यपमुनिशापो भवेदिति ध्वन्यते। यद्यनुरक्ता तर्हि सैवागमिष्यतीतिचेत्तत्राह—सेति। सा अनुभूता। यत्तदोर्नित्यसम्बन्धेऽपि अत्र सेति तच्छब्दः यच्छब्दं नापेक्षते। तदुक्तम्—"प्रक्रान्तप्रसिद्धानुभूतार्थस्यच्छब्दो यच्छब्दं नापेक्षते" इति। बाला अप्रगल्भा शकुन्तला परवती पराधीना इति मे मया विदितं सखीभ्यां काश्यपसुतात्वेन कथनाज्ज्ञातम्। अत्र ज्ञानार्थाद्विदेः "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। तदन्तस्थ विदितशब्दस्य समभिव्याहारे "क्तस्य च वर्तमाने" इत्यस्मच्छब्दात् षष्ठी। इदं च षष्ठीविधायकं सूत्रम् "न लोक" इति निषेधस्यापवाद इत्यत्रोपपद्यत एव षष्ठी॥ विदितमित्यस्य वाक्यार्थः कर्म। अनेन तस्या अभिसरणमपि न सिध्यतीति गम्यते। यद्यस्याः पराधीनत्वादभिसरणं न सिध्यति बलादपहरणे च मुनिशापप्राप्तिस्तर्हि तद्विषयाभिलापस्त्यज्यतामित्यत्राह—तथापीति। तथापि उभयोर्विदितत्वेऽपि ततः शकुन्तलातः इदं तस्यामासक्तं हृदयं निवर्तयितुं नालमस्मि न समर्थोऽस्मि। तदनुरागि मच्चित्तं मयानिवर्त्यमानमपि तत्सौन्दर्यबलात्स्वयं न निवर्तते। मयापि तस्य निवर्तनमशक्यमिति भावः। आर्यावृत्तम्॥ २॥

विश्वसनीयाभ्याम् शीतरश्मित्वं चन्द्रमसः पुष्पबाणत्वं च मन्मथस्य विश्वसनीयत्वे हेतुः। कामिजनसार्थः विरहिसमूहः अतिसन्धीयते प्रतार्यते।

तवकुसुमशरत्वं शीतरश्मित्वमिन्दो-

र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै

स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

---

यदुक्तं त्वया चन्द्रमसा चातिसन्धीयते कामिजनसार्थ इति तदेवोपपादयति— **तवेति** ॥ तव मन्मथस्य कुसुमान्येव पुष्पाण्येव शराः बाणाः यस्य तस्य भावः कुसुमशरत्वम् । कुसुमशब्देनात्यन्तपेलवत्वं तेन विश्वसनीयतायां हेतुरुक्तः । तथा इन्दोश्चन्द्रस्य शीताः शीतलाः रश्मयः किरणाः यस्य तस्य भावः शीतरश्मित्वम् । इदं द्वयं मद्विधेषु मम विधेव विधा प्रकारः येषां तेषु मत्सदृशेषु । केवलं मयि न मत्सदृशेषु सर्वेष्वपि विरहिष्वित्यर्थः । अयथार्थमत्र यथाशब्दः सादृश्यार्थे । तदुक्तम्— "योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः" इति । तथा च यथा-तादृशः अर्थो यस्य तत् यथार्थं तद्विपरीतमयथार्थम् । "तदन्यतद्विरुद्धतदभावेषु नञ्वर्तते" इति विरुद्धार्थेऽत्र नञ् । विपरीतार्थमित्यर्थः । दृश्यते स्फुटं विभाव्यते । अयथार्थत्वे उत्तरवाक्यार्थं हेतुत्वेनाह—विसृजतीति । इन्दुः चन्द्रः हिमानि तुषाराः गर्भः आवरणं येषां तैः येषामन्तस्थिताग्नेर्हिममावरणं तैः मयूखैः । किरणैः अग्नि विसृजति विकिरति । अग्निं हिमेन प्रच्छाद्य मुञ्चतीत्यर्थः । केचित्तु हिमं गर्भे अभ्यन्तरे येषां तैरिति व्याचक्षते तदसङ्गतम् । तथा सति शराणामापाततोऽग्निदिग्धतायां अन्तस्तुषारमयत्वेऽपि विश्वसनीयतानुपपत्तेः शीतरश्मित्वव्यवहारो न स्यात् । त्वं मन्मथोऽपि कुसुमबाणान् शोषणमोहनादिलक्षणारविन्दादिपञ्चशरान् वज्रसारीकरोषि । वज्रवत्साराः दृढाः वज्रसाराः अवज्रसारान् कोमलान् वज्रसारान् वज्रसमानदार्ढ्यान्करोषि । वज्रसारीति च्व्यन्तं पृथक्पदम् । विस्तरः कृत्ययोरिति श्लोकव्याख्याने द्वैधीभवतीत्यत्र निरूपितः । मन्मथशराणां वज्रोपमानकथनेन राज्ञो हृदयस्य पर्वतसाम्यं ध्वनितम् । उत्तरार्धे प्रक्रमभङ्गः विरहिणो राज्ञो वचनमिति परिहर्तव्यः । अथवा "त्वमिह कुसुमबाणान्वज्रसारान्विधत्से विसृजति स च वह्निं शीतगर्भैर्मयूखैः" इति पठित्वा परिहरणीयः । तथा चूर्णिकायां त्वया चन्द्रमसा चेत्युक्तेः पूर्वार्धे "शीतरश्मित्वमिन्दोः" इत्यत्र तवेतिवत्सर्वनामपरामर्शो न्याय्यः । नेन्दुपदोपादानम् । अतः "शीतरश्मित्वमस्य" इति पठनीयम् । अपह्नवालङ्कारः । मालिनी वृत्तम् ॥ ३ ॥

भगवन् कामदेव, न ते मय्यनुक्रोशः। (मदनबाधां निरूप्य।) कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत्! आं ज्ञातम्।

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।
त्वमन्यथा मन्मथ मद्विधानां
भस्मावशेषः कथमित्थमुष्णः॥ ४॥

अथवा।

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति॥ ५॥

भगवन् कंदर्प एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः।

वृथैव संकल्पशतैरजस्र-
मनङ्ग नीतोऽसि मया विवृद्धिम्।

---

**अद्यापीति**। एतदादिश्लोकत्रयं प्रक्षिप्तमपि केषुचित्पुस्तकेषु दृष्टत्वान्मूले निवेशितम्। हे मन्मथ, अम्बुराशौ समुद्रे और्व इव वडवानल इव अद्यापि सांप्रतमपि हरकोपवह्निः शंभोः क्रोधानलः त्वयि ज्वलति दीप्यते। नूनं नात्र संशयः। अन्यथा वह्नेस्तस्य निर्वाणत्वे मद्विधानां कामिजनानां भस्मैव अवशेषो यस्य स तथोक्तस्त्वं कथं इत्थं उष्णः सन्तापकारी भवेरिति शेषः। अत्र पूर्ववाक्यार्थसमर्थनायोत्तरवाक्यार्थस्य हेतुत्वेनोपादानात्काव्यलिङ्गम्। और्व इवेत्युपमा च वृत्तमुपजातिः॥ ४॥

**अनिशमिति**। मकरो मत्स्यः केतुर्ध्वजो यस्य सः मन्मथः मदिरायतनयनां मदिराविव मत्तखञ्जनाविव। "मदिरो मत्तखञ्जनः" इति शब्दरत्नावली। आयते नयने यस्यास्ताम्। अथवा मदिरे मदजनके "इषिमदि—" इत्यादिना मदेरौणादिकः किरच्। आयते दीर्घे च नयने यस्यास्तां शकुन्तलां अधिकृत्य विषयीकृत्य प्रहरतीति यदि प्रहरति चेत्तदेति शेषः। मनसः मच्चित्तस्य रुजं आवहन् जनयन्नपि मेऽभिमतः। मन्मथो यथा मां बाधते तथा शकुन्तलामपि बाधेत चेत्तदा मनोरोगजनकोऽपि मन्मथो मेऽभिमत इति भावः। उक्तंच मालविकाग्निमित्रीये— "परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः" इति॥ ५॥

**वृथैवेति**। हे अनङ्ग, त्वं संकल्पशतैः आशंसापरिकल्पितप्रियासंगमादिभिः वृथैव निष्फलमेव विवृद्धिं नीतोऽसि। न केवलं त्वद्वर्धनं निष्फलं किंत्वनर्थावहमि-

आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः ॥ ६ ॥

(सखेदं परिक्रम्य ।) क्व नु खलु संस्थिते सवनकर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । (निश्वस्य ।) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । (सूर्यमवलोक्य ।) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । (परिक्रम्य स्पर्शसुखं रूपयित्वा ।) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरंगाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ७ ॥

---

त्याह—आकृष्येति । श्रवणोपकण्ठे कर्णान्तिके चापं धनुराकृष्य मय्येव तव बाणमोक्षः युक्त इति काकुः । न युक्त इत्यर्थः । वृत्तमुपजातिः ॥ ६ ॥

क्वन्विति । सवनकर्मणि यागकर्मणि संस्थिते समाप्ते । प्रवातसुभगः प्रकृष्टो वातोयस्मिन्सतथोक्तः सचासौ सुभगश्च अत्रपवनस्य प्रकृष्टताशैत्यादिगुणबाहुल्यवत्वेनेतिज्ञेयम् । अथवा प्रवातेन शैत्यसौरम्यमान्द्यादिगुणयोगितया प्रकृष्टेन वातेन सुभगः सुखविहारः ।

शक्यमिति । अरविन्दैः पद्मैः सुरभिः सुगन्धी । "सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभिः स्मृतः" इति विश्वः । तथा, मालिन्यास्तदाख्याया नद्यास्तरङ्गाणामूर्मीणां कणान्पृषतः वहतीति कणवाही पवनः । नित्यसापेक्षत्वात्समासः । अत्रारविन्दसुरभिरित्यनेन सौरभं । कणवाहीत्यनेन शैत्यं । कणानां बाहुल्येन दुर्वहत्वात्पवनस्य मान्द्यं चोक्तम् । अनङ्गतप्तैः मन्मथक्लिष्टैः अङ्गैः सर्वावयवैः अविरलं गाढं यथातथा आलिङ्गितुं शक्यं योग्यम् । "शकिसहोश्च" इति कर्मणि यति कृते शक्यमिति सिद्धम् । तस्य च सामान्ये नपुंसकत्वम् । तेन सह भिन्नलिङ्गवचनस्यापि पवनस्य सामानाधिकरण्यम् "शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्" इति भाष्यप्रयोगात्सिध्यति । तथाच वामनः—"शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्" इति । अत एव रामायणेऽपि—"शक्यमञ्जलिभिः पातुं वाताः कैतकगन्धिनः" इति प्रयोगः । प्रयुक्तं च कालिदासेनैव

(परिक्रम्यावलोक्य च ।) सत्यमस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया शकुन्तलया भवितव्यम् । तथाहि । (अधो विलोक्य ।)

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ८ ॥

---

मालविकाग्निमित्रीये—"एवं प्रणयवती सा नहि शक्यमुपेक्षितुं कुपिता" इति शक्यमित्यव्ययमिति केचित् । तत्र न किमपि प्रमाणम् । अतः "शकिसहोश्च" इति यत्प्रत्ययान्ताल्लिङ्गसामान्यनपुंसकत्वविवक्षायां सुप्यमादेशे च शक्यमिति रूपम् । ततो भिन्नलिङ्गसामानाधिकरण्येऽपि "भुक्तवन्तं प्रति माभुङ्क्था इति ब्रूयाः । किं तेन कृतं स्यात्" इति न्यायेन । प्रथमप्रवृत्तसंस्कारबाधायोगात्तस्य नपुंसकत्वमेव । भिन्नलिङ्गैः सामानाधिकरण्यं च भवत्येव । अत एव भाष्ये—"शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्" इति प्रयुक्तम् । सूत्रकृतापि "संस्कृतंभक्षाः" इति "तेन तुल्यं क्रिया चेद्वतिः" इति च प्रयुक्तमिति ज्ञेयम् । अत्र पवनोऽङ्गान्यालिङ्गतीति कर्तृकर्मवद्भावे वाच्ये तद्वैपरीत्यकथनमङ्गानामतिदुस्सहमन्मथशरविद्धतया जीवितनैराश्येन शैत्यसौरभ्याद्युद्दीपनगुणपूर्णपवनालिङ्गनाशंसायां हेतुः सूचितः कविनेत्यनुसन्धेयम् । ननु तथात्वेऽपि सर्वतोऽप्युद्दीपकः पवनः कुतः प्रार्थ्यत इति चेत् । "इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति" इति पूर्वमुक्तेः, अत्र मालिनीतरङ्गाणां कणवाहीति वायोर्विशेषणेन च नायिकासंस्पृष्टत्वात्प्रार्थ्यत इति समाधेयम् । अनेनैवोक्तमन्यत्र—"आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति" । प्रियजनावयवस्पृष्टवस्तुस्पर्शनस्य विरहिणां सुखहेतुत्वेनाभ्युपगमात्प्रार्थ्यत इति भावः । तथाचोक्तम्—"वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्मस्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपनतवतां दर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः" इति ॥ आर्या वृत्तम् ॥ ७ ॥

अभ्युन्नतेति । पुरस्तात्पादाग्रभागे अभ्युन्नता आभित उन्नता । उन्नतत्वस्य सापेक्षत्वात्पश्चाद्भागापेक्षयोन्नतेत्यर्थः । पश्चात् गुल्फदेशे जघनस्य नितम्बस्य गौरवात् भारात् अवगाढा निम्ना । अनेन पूर्वानुभूततदीययौवनपरिपोषदशा सूच्यते । जघनगौरवादित्यत्र "तत्स्थैश्च गुणैः समासो वक्तव्यः" इति वार्तिकेन समासः । तत्स्थत्वं च गुणिसामानाधिकरण्याभावे सति गुणमात्रवाचकत्वम् । यथा चन्दनगन्ध इति । नहि चन्दनं गन्ध इति गुणिसामानाधिकरण्यं गन्धस्य संभवति ।

यावद्विटपान्तरित एवालोकयामि । (परिक्रम्य तथा कृत्वा । सहर्षम् ।) अये, लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विस्रम्भकथितानि । (इति विलोकयन्स्थितः ।)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।)

सख्यौ—(उपवीज्य सस्नेहम् ।) [1]हला सउन्दले, अवि सुहाअदे दे णलिणीपत्तवादो ।

शकुन्तला—[2]किं वीअअन्दि मं सहीओ ।

(सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः ।)

राजा—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । (सवितर्कम् ।) तत्किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्तते । (साभिलाषं निर्वर्ण्य ।) अथवा कृतं संदेहेन ।

---

१. हला शकुन्तले, अपि सुखायते ते नलिनीपत्रवातः ।

२. किं विजयतो मां सख्यौ ।

---

एवं प्रकृतेऽपि गौरवस्य जघनसामानाधिकरण्याभावात्तत्स्थत्वम् ॥ तथा अभिनवा अचिरभूता । अनेन विस्रम्भालापादिकमितः परं श्रोतुं शक्यत इति ध्वन्यते । पदपङ्क्तिः पदचिह्नावली "पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि" इति विश्वः । अस्य वेतसपरिक्षिप्तस्य लतामण्डपस्य पाण्डवः श्वेताः सिकताः वालुकाः यत्र तथोक्ते "सिकता स्त्री सिकतिले वालुकायां तु भूमनि" इति मेदिनीकोशात् । सिकताशब्दः स्त्रीलिङ्गो बहुवचनान्तश्च । द्वारे दृश्यते । अत्र विशिष्टपदपङ्क्त्या वेतसलतागृहे शकुन्तलासद्भावानुमानादनुमानालङ्कारः । तल्लक्षणं यथा—"अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः । पदेन यत्र कुब्जेन कुब्जपादोऽनुमीयते" इति । स्वभावोक्तिश्च ॥ आर्या वृत्तम् ॥ ८ ॥

अय इति । नेत्र निर्वाणम् नेत्रयोर्नयनयोर्निर्वाणम् आनन्दः । मनोरथप्रियतमा मनोरथेन मनोगतेनाभिलाषेण पियतमा प्रेष्ठा न तु प्रतिग्रहादिना अद्यापिरतेरनिर्वाहात् । शिलापट्टशयनमिति "अधिशीङ्स्थासांकर्म" इति द्वितीया । यथोक्तव्यापाराशीतलशिलातलशयनकृतसख्युपचारयुक्ता । आतपदोषः निदाघजनिततापः उत आहोस्वित् यथा मेमनसि वर्तत इति मनसिजकृतत्वेनैवात्मनो वितर्क इति भावः ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ९ ॥

**प्रियंवदा**—(जनान्तिकम् ।) अणसूए तस्स राएसिणो पढमदंसणा-दो आरहिअ पज्जुस्सुआ विअ सउन्दला । किं णु क्खु से तण्णिमित्तो अअं आतङ्को भवे ।

१. अनसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खल्वस्यास्तन्निमित्तोऽयमातङ्को भवेत् ।

स्तनेति । स्तनयोर्न्यस्तमर्पितं उशीरं यस्य तत्तथोक्तम् । अनेन निश्वा-सगतागतसमये तद्गन्धस्त्वन्तर्लगत्वित्यभिप्रायेण सन्तापनिवारणायात्युच्चस्तनयोरेवो-शीरं न्यस्तमिति ध्वन्यते । अत एव न हृदि न्यस्तेऽति प्रयुक्तम् । किंच न्यस्तमित्य-नेन न स्वेन धृतं किं तु सखीभ्यां न्यस्तमिति सर्वावयवपारवश्यं सूच्यते । अनेन "ता-पाधिक्यं ज्वरो मतः" इत्युक्तलक्षणो ज्वरो नाम नवमो मदनावस्थाविशेषो निरूपितः । प्रशिथिलं सन्तापातिशयेन शुष्कतया प्रकर्षेण श्लथीभूतं । मृणालस्य एकं वलयं यस्य तत्तथोक्तम् । अनेन विसवलयस्य सन्तापातिशयात् शुष्कत्वेन शिथिलीभावकथ-नात् मदनज्वरस्य प्राबल्यमङ्गानां तानवं च व्यज्यते । किञ्च मृणालैकवलयमित्यनेन वलयान्तरासहत्वं च सूच्यते । प्रियायाः शकुन्तलाया इदं पुरोवर्ति वपुः शरीरं साबाधं आसमन्ताद्बाधया पीडया सहवर्तमानम् । निरतिशयवेदनाभिभूतमित्यर्थः । आङा पीडायाः सर्वाङ्गगतत्वं व्यज्यते । तदपि साबाधमपि कमनीयं मनोहरम् । मनसिजः मन्मथः निदाघप्रसरः ग्रीष्मवेगः तयोः तापः दाहः कामं यद्यपि सम-स्तुल्यः । उभावेव शरीरं तुल्यतया सन्तापयत इत्यत्र संशयो नास्तीत्यर्थः । तु तथापि युवतिषु विषये ग्रीष्मस्य निदाघस्य अपराद्धं सन्तापरूपोऽपराधः । नपुं-सके भावे क्तः । एवं दृश्यमानप्रकारेण लावण्यापरित्यागेनेत्यर्थः । सुभगं रमणीयं न भवति ग्रीष्मविरहतापयोरयमेव विशेषः यत् ग्रीष्मस्य लावण्यनाशकत्वं विरहस्यतु तदभाव इति । यथा रामायणे । "ज्योत्स्नातुषारमलिना पौर्णमास्यां हि लक्ष्मण । सीतेवचातपश्यामादृश्यतेनचशोभते" इति । अत्रातपश्यामेत्यनेन ग्रीष्म-स्य लावण्यनाशकत्वमुक्तम् वक्ष्यति च—"केवलं लावण्यमयी छाया त्वां न मुञ्चति" इति । लावण्यशेषतया सुभगत्वादसंशयं मदनाभिभूतैवेयमित्याशयः । व्यतिरे-कालङ्कारः । शिखरिणी वृत्तम् ॥ ९ ॥

पर्युत्सुकेव सोत्कण्ठेव तस्यांमिथ्यापवाद कणन भया दिवशब्द प्रयोगः ।

**अनसूया**—सहि, ममवि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । (प्रकाशम् ।) सहि । पुच्छिदव्वासि किंपि । वलवं क्खु दे संदावो ।

**शकुन्तला**—(पूर्वार्धेन शयनादुत्थाय ।) हला, किं वत्तुकामासि ।

**अनसूया**—हला सउन्दले, अणब्भन्तरा क्खु अह्मे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिवन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसिं दे पेक्खामि । कहेहि । किंणिमित्तं दे संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

**राजा**—अनसूयामप्यनुगतो मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

**शकुन्तला**—(आत्मगतम् ।) वलवं क्खु मे अहिणिवेसो । दाणि वि सासा एदाणं ण सक्कणोमि णिवेदिदुं ।

**प्रियंवदा**—सहि सउन्दले, सुठ्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

---

१. सखि, ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि, प्रष्टव्यासि किमपि । वलवान्खलु ते संतापः ।

२. हला, किं वक्तुकामासि ।

३. हला शकुन्तले, अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिवन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि । कथय । किंनिमित्त एष ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।

४. वलवान्खलु मेऽभिनिवेशः । इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।

५. सखि शकुन्तले, सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ।

---

अनभ्यन्तराः स्वरूपानभिज्ञाः इतिहासनिवन्धेषु इतिहासग्रन्थेषु कामयमानानां विरहिणाम् । एतादृशवितर्के इतिहासकथाश्रवणजनितज्ञानमेव निमित्तम् । अन्यथा प्रत्यक्षतोदर्शनेऽप्यन्यदीयाया अवस्थायाःस्वरूपस्य दुर्ज्ञेयत्वात् । विकारं खल्विति । व्याधेस्तत्वमविज्ञाय चिकित्सारम्भोनुचित इत्यर्थः ।

**राजा**—अवितथमाह प्रियंवदा । तथा हि ।

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ १० ॥

**शकुन्तला**—[1]सहि कस्स वा अण्णस्स कहइस्सं । किंदु आआसइत्तिआदाणिं वो भविस्सं ।

**उभे**—[2]अदो एव्व क्खु णिब्बन्धो । सिणिद्धजनसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

---

१. सखि, कस्य वान्यस्य कथयिष्यामि । किन्तु आयासयित्रीदानीं वां भविष्यामि ।
२. अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

---

क्षामक्षामेति । आननं मुखं क्षामक्षामौ । "प्रकारे गुणवचनस्य" इति द्विर्वचनम् । अतिकृशौ कपोलौ यस्य तत्तथोक्तम् । कपोलौ पूर्वमेव कृशौ इदानीं विरहतापातिशयात्कृशतरावित्यर्थः । उरो वक्षः काठिन्येन कार्कश्येन मुक्तौ विरहितौ स्तनौ यत्र तत्तथोक्तम् । इदमपि कार्श्यादेवेति भावः । मध्यः अवलग्नभागः क्लान्ततरः नितरां कृशः पूर्वं क्लान्तः अधुना क्लान्ततरः । कृशतर इत्यर्थः । अंसौ भुजशिरसी प्रकामम् अर्थं विनतौ स्तनभारेणांसौ पूर्वमेव नतौ इदानीं प्रकर्षेण विनतावित्यर्थः । छविः कान्तिः । पाण्डुरा पाण्डुगुणवती "नगपांसुपाण्डुभ्यश्च" इति मत्वर्थीयो रप्रत्ययः । अनेन वैवर्ण्याख्यः सात्त्विकभावो निरूपितः । मदनक्लिष्टा मन्मथपीडिता इयं शकुन्तला पत्त्राणां पर्णानां शोषयतीति शोषणः । "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । शोष्यतेऽनेनेति करणे विग्रहे तु नपुंसकत्वं स्यात् ॥ तेन शोषयित्रेत्यर्थः । मरुता दाक्षिणमारुतेन स्पृष्टा अभिभूता माधवी वासन्तीलतेव । लतामात्रस्य कार्श्यसंभवेऽपि माधवीग्रहणं प्रियदर्शनत्वद्योतनार्थम् । शोच्या शोचनीया । मदनक्लिष्टत्वाद्दुःखमुत्पादयितीति यावत् । प्रियं मधुरं दर्शनमवलोकनं यस्याः सा तथोक्ता च । अवयवापचयवत्त्वेऽपि अपरिहीयमाणलावण्यतया स्वविषयानुरागजनितक्षामतादिमत्त्वेन च हृद्यदर्शना आलक्ष्यते दृश्यते । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ११ ॥

शकुन्तला—सहि, जदो पहुदि मम दंसणपहं आअदो सोतवो-वणरक्खिदा राएसी, तदो आरहिअ दग्गदेण अहिलासेण एतदवत्थह्मि संवुत्ता ।

---

१. सखि, यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता ।

---

पृष्टेति । इयं परिदृश्यमाना एतदवस्थाङ्गतेत्यर्थान्तरसंक्रमितवाच्यम् । बाला अप्रगल्भा प्रौढा चेल्लज्जया न वदिष्यतीति कैतवानभिज्ञत्वं द्योतयितुं बालेत्युक्तम् । समे तुल्ये । दुःखसुखे यस्य तादृशेन । यत्संवन्धिदुःखसुखे अर्थाच्छकुन्तलादुःखसुखाभ्यां तुल्ये ससखीजनः समदुःखसुख इति विग्रहार्थः । तथा च दुःखे दुःखिना सुखे सुखिनेत्यर्थः । जनेन सखीजनेन । अनेन मनोगतार्थकथनयोग्यता सूचिता । पृष्टा अनुयुक्ता सती मनोगतं हृदिस्थं आधेर्मनः पीडायाः हेतुं कारणम् । "पुंस्याधिर्मानसी व्यथा" इत्यमरः । न वक्ष्यतीति न । अपि तु वक्ष्यत्येवेत्यर्थः । प्रकृतार्थदार्ढ्ये नञ्द्वयम् किन्तु अनया शकुन्तलया बहुशः वारंवारम् । कादाचित्कदर्शने स्वविषयकानुरागनिर्णयानुदयाद्बहुश इत्युक्तम् । सतृष्णं साभिलाषं यथानुरागव्यक्तिर्भवति तथेत्यर्थः । उत्तमनायिकाया ललितविलोकनादीनां स्वाभविकत्वात्सतृष्णमित्युक्तम् । विवृत्य दृष्टोऽपि प्रथमसमागमानन्तरमाश्रमप्रतिगमनकाले दर्भाकुरक्षतादिव्याजेन स्थित्वा परावृत्यावलोकितोऽपि । अत्र अस्मिन्नवसरे श्रवणे उत्तराकर्णने कातरतां भयविह्वलत्वं गतोस्मि प्राप्तोऽस्मि । यदीयं न मम तापो मदनदोषजः किन्त्वातपदोषज इति निर्दिशेत्तदा हतोऽस्मि मन्दभाग्य इत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

राजा—(सहर्षम् ।) श्रुतं श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १२ ॥

शकुन्तला—[1]तं जइ वो अणुमदं ता तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा अवस्सं सिञ्चध मे तिलोदअं ।

राजा—संशयच्छेदि वचनम् ।

प्रियंवदा—(जनान्तिकम् ।) [2]अणसूए, दूरगअवम्महा अक्खमा इअं कालहरणस्स । जस्सिं वद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणन्दिदुं ।

अनसूया—(जनान्तिकम् ।) [3]तह जह भणासि । (प्रकाशम् ।) सहि, दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहिं वा महाणई ओदरइ ।

---

१. तद्यदि वामनुमतं तदा तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि अन्यथावश्यं सिञ्चतं मे तिलोदकम् ।

२. अनसूये दूरगतमन्मथाक्षमेयं कालहरणस्य । यस्मिन्वद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

३. तथा यथा भणसि । सखि, दिष्ट्यानुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ।

---

स्मर इति । स्मर एव मन्मथ एव मे मम तापस्य विरहसन्तापस्य हेतुः कारणम् । अभूदिति शेषः । स एव मे निर्वापयिता मम शकुन्तलायामिव तस्यामप्यनुरागोत्पादनेन सन्तापहारकः । जातः संवृत्तः । तत्रोपमामाह—दिवस इवेति । तपात्यये तपस्य निदाघस्य अत्यये अपगमे । प्रावृषीत्यर्थः । जीवलोकस्य प्राणिवर्गस्य तापहेतुः निर्वापयिता चेति पदद्वयं दिवसस्यापि विशेषणतया योजनीयम् । तथा च वर्षणात्पूर्वमूष्मलत्वात्तापकरः वर्षणे सति तापापनोदकः अभ्रैर्मेघैः श्यामः नीलः मेघाच्छन्नतया कृष्णवर्णः दिवस इव । प्रावृषि हि दिवसः किञ्चित्कालं सातपतया ग्रीष्मादप्यधिकतापकर; किञ्चित्कालं मेघाच्छन्नतया सन्तापहारकश्च दृश्यत इति भावः । उक्तंच रत्नावल्याम्—" तपतिप्रावृषि नितरामभ्यर्णजलागमो दिवसः" इति । आर्या वृत्तम् ॥ १२. ॥

सिञ्चतम् निवपतम् । प्रजागरकृशः निद्राभावात् क्षीणतां गतः. ।

प्रियंवदा—[1]को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि ।

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

अनसूया—[2]को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेह्म ।

प्रियंवदा—[3]णिहु अंत्ति चिन्तणिज्जं भवे । सिग्घंत्ति सुअरं ।

अनसूया—[4]कहं विअ ।

प्रियंवदा—[5]णं सो राएसी इमास्सि सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि ।

राजा—सत्यमित्थंभूत एवास्मि । तथा हि ।

> इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
> निशि निशि भुजन्यस्तापाङ्गप्रसर्पिभिरश्रुभिः ।

---

१. क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ।

२. कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ।

३. निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् ।

४. कथमिव ।

५. ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते ।

---

इदमिति । निशिनिशि प्रतिनिशम् । वीप्सायां द्विरुक्तिः । अनेन तदेकतानमनस्कता ज्ञाप्यते । भुजे उपधानीकृते वाहौ न्यस्तान्निहितादपाङ्गान्नेत्रान्तात्प्रसर्पितुं शीलं येषां तैः । अनेन प्रजागराच्छय्यायां मुहुर्मुहुर्विवर्तनैः सत्यप्युपधाने तस्य निष्फलत्वात्स्वभुजमेवोपधानीकृत्य शयने क्रियमाणे तत्राश्रूणि पतन्तीति भावः । अन्तस्तापात् विरहज्वरजनितसर्वाङ्गसन्तापात् अशिशिरैः उष्णैः अश्रुभिर्वाष्पैः विगतो वर्णो येषां ते विवर्णाः विच्छायाः मणयो यत्र तत् विवर्णमणि अविवर्णमाणि विवर्णमणि संपादितं विवर्णमणीकृतम् । "च्वौ च" इति दीर्घः स्वाभाविककान्तिमन्तोऽपि वलयखचिता मणयः अविरतमत्युष्णाश्रुपातेन दर्पणादिवद्विवर्णा भवन्तीति भावः । अनेनाश्रुनामकः सात्त्विकभाव उक्तः । अन-

अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १३

**प्रियंवदा**—(विचिन्त्य ।) हला, मअणलेहो से करीअदु[1] । तं सुम-णोगोविदं करिअ देवप्पसादव्वाबदेसेण से हत्थअं पावइस्सं ।

**अनसूया**—रोअइ[2] मे सुउमारो पओओ । किं वा सउन्दला भणादि ।

**शकुन्तला**—किं[3] णिओओ वो विकप्पीअदि ।

**प्रियंवदा**—तेण[4] हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव ललिअ-पदबन्धणं ।

---

१. हला, मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्यापदेशेन सुमनोगो-पितं कृत्वा तस्य हस्तं प्रापयिष्यामि ।

२. रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

३. को नियोगोवां विकल्प्यते ।

४. तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम् ।

---

तिलुलितः अनतिसंसक्तः । ज्यायाः मौर्व्याः आघातेन योऽङ्कः मौर्वीकिणलाञ्छन-मिति यावत् । यस्मिन्कर्मणि तद्यथातथा । अनेन ज्याघातेन प्रकोष्ठस्य किणि-तत्वाद्वलयं तत्र क्षणमात्रं प्रतिबद्धं भवतीति व्यज्यते । मणिबन्धनात् मणेर्बन्धन-मत्र मणिबन्धनं पाणिप्रकोष्ठयोः सन्धिस्थानं तस्मात् स्रस्तं स्रस्तं मुहुर्मुहुः पाणि मूलमागतं "आमीक्ष्ण्ये द्विरुक्तिः" कनकवलयं मुहुः वारंवारं मया प्रतिसार्यते। प्रकोष्ठादूर्ध्वं नीयते । अनेन मणिबन्धनस्य निरतिशयं कार्श्यं सूचितम् । अत्र पूर्वा र्धेन प्रजागरः उत्तरार्धेन कार्श्यं चेति विरहिणामवस्थाद्वयमुक्तम् । हरिणी वृत्तम् ॥ १३ ॥

मदनलेखः कामिन्या स्ववल्लभायात्मानुरागख्यापनायाभिलिखिता पत्रिका । तदुक्तम् "लेखप्रख्यापनैस्निग्धैर्वीक्षितैर्मृदुभाषितैः । दूतीसम्प्रेषणैर्नार्याभावाभि-व्यक्तिरिष्यते ॥" इति । उपन्यासपूर्वम् प्रथमनिवेदनपूर्वम् ।

शकुन्तला—हला, चिन्तेमि अहं । अवहीरणभीरुअं पुणो वेवइ मे हिअअं ।

राजा—(सहर्षम् आत्मगतं ।)

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् । repulse.
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ १४ ॥

सख्यौ—अइ, अत्तगुणावमाणिणि, को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ।

शकुन्तला—(सस्मितम् ।) णिओइआ दाणिं ह्मि । (इत्युपविष्टा चिन्तयति ।)

१. हला, चिन्तयाम्यहम् । अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् ।

२. अयि, आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदींज्योत्स्नां पटान्तेन वारयति ।

३. नियोजितेदानीमास्मि ।

अयमिति । हे भीरु भयशीले, यतः यस्माज्जनात् अवधीरणां तिरस्कारं विशंकसे स्वयमेवाभिसरणे क्रियमाणे औदासीन्यं भवेदिति विशेषेण तर्कयसि अयं ते संगमे समागमे उत्सुकः व्यग्रहृदयः तिष्ठति । तत्र दृष्टान्तमाह—लभेतेति । श्रियं संपदं प्रार्थयिता अभिलषन् पुरुषः लभेत वा नवा श्रियमिति शेषः॥ श्रिया संपदा ईप्सितः आप्तुमिष्टः "आप्ज्ञप्यृधामीत्" इतीकारः । कथं दुरापः दुर्लभः। "ईषद्दुः" इत्यादिना खल्प्रत्ययः । भवेत् । यथा धनार्थिनो धनप्राप्तिरनियता धनिन स्त्वभिलषितवस्तुलाभे न कदापि संशयः तथा मत्प्रार्थिता त्वत्प्राप्तिरानियता । त्वत्प्रार्थितोऽहं न कदापि दुर्लभो भविष्यामीति भावः । दृष्टान्तालंकारः । वंशस्थं वृत्तम् ॥

आत्मगुणावमानिनीति । स्वगुणानां गौरवं स्वयं न जनासि अत एवेयमवधीरणाशङ्का तव हृदयस्येति भावः ॥ शरीरनिर्वापयित्रीम् शरीरसुखदायिनीम् शारदीम् शरत्कालसम्बन्धिनीम् अतिशयेनाह्लादकारिणीमित्यर्थः ।

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १९ ॥

शकुन्तला—[1]हला, चिन्तिदा मए गीदि । ण क्खु सण्णिहिदाणि लेहणसाहणाणि ।

प्रियंवदा—[2]इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्तवण्णं करेहि ।

शकुन्तला—(यथोक्तं रूपयित्वा ।) [3]हला, सुणुह दाणिं संगदत्था ण वेत्ति ।

उभे—[4]अवहिद ह्म ।

---

१. हला, चिन्तितं मया गीतवस्तु । न खलु संनिहितानि लेखनसाधनानि ।
२. एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।
३. हला, शृणुतमिदानीं संगतार्थं न वेति ।
४. अवहिते स्वः ।

---

**उन्नमितेति** । पदानि गीतपदानि रचयन्त्याः योजयन्त्याः अस्याः शकुन्तलायाः उन्नमिता उत्क्षिप्ता एका भ्रूलता यत्र तत्तथोक्तम् । इदं पदमुपादेयमनुपादेयं वेति वितर्के किञ्चिदुत्क्षिप्तभ्रूलतत्वं संभवतीत्यर्थः । उक्तं च संगीतरत्नाकरे—"स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे । भ्रूर्लीलाहेलयोश्चैव कार्योत्क्षिप्ताविचक्षणैः" इति । आननं मुखं कण्टकः रोमाञ्चोऽस्य संजातः कण्टकितः । "तदस्य संजातं तारकादिभ्य इतच्" इति इतच् । तेन कपोलेन गण्डेन । एकवचनेन यैवैका भ्रूलता उन्नमिता तद्भागस्थकपोल एव रोमाञ्चितो भवतीति व्यज्यते । मयि मद्विषये । मयीति स्वस्याधिकरणत्वेन कथनादात्मनो धन्यता सूच्यते । अनुरागं प्रीतिविशेषम् । उक्तं च सुधाकरे—"राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः" इति । प्रथयति प्रकटयति । अत्र आननं वदतीति "कृशाङ्ग्याः सन्तापं वदति विसिनीपत्रशयनं" इति वदत्यन्ततिरस्कृतवाच्यो ध्वनिः मदनलेखन्यासोचित पदस्मरणमात्रेणोद्गतोयं रोमाञ्चो मद्विषयानुरागमाविष्करोतीति भावः ॥ १५ ॥

**शकुन्तला**—(वाचयति ।)

तुज्झ ण आणे हिअअ मम उण मअणो दिवावि रत्तिंवि ।
णिग्घिण तवइ बलिअं तुइ जुत्तमणोरहाइं अङ्गाइं ॥ १६ ॥

**राजा**—(सहसोपसृत्य ।)

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १७ ॥

---

१. तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रिमपि ।
निर्घृण तपति बलवत्त्वयि युक्तमनोरथान्यङ्गानि ॥

---

**तुज्झेति** । हे निर्घृण निष्कृप, ममैतादृशीमवस्थामालोक्यापि न तव दयोत्पन्नेति निर्घृणेति संबोधनम् । तव हृदयं मानसम् "हृदयं मानसोरसोः" इति विश्वः। न जाने । परहृदयस्याप्रत्यक्षत्वात् साभिलाषं निरभिलाषं वेत्यहं न वेद्मीत्यर्थः। अनेनात्मन उत्कण्ठातिशयस्तस्य तदभावश्च ज्ञाप्यते । अस्यचवाक्यस्य स्वोत्कण्ठातिशयनिवेदनमात्रेतात्पर्यम् । अन्यथातन्मनोरथापरिज्ञाने मदनलेखप्रेषणप्रवृत्तेरसम्भवात् । भ्रमरबाधानिवारणेन तदीयसदयहृदयत्वस्य पूर्वमगतत्वात् । मदनुरागपरीक्षणार्थं नैर्घृण्याश्रयण मनुचितमिति भावः ॥ एतदनुसन्धानेनैव निघृणेति सम्बुद्धिःसंगच्छते । मम पुनः मम तु अत्र पुनस्त्वर्थे । त्वयि विषये युक्ताः संसक्ताः मनोरथा येषां तानि आलिंगनं हस्तयोः, त्वन्मुखकमलावलोकनं चक्षुषोः, त्वद्वचनामृतरसपानं श्रवणयोः, त्वद्वदनसरोजाघ्राणं नसोः, इत्यादिस्वस्वानुरूपमनोरथानि अङ्गानि मदनः कामः दिवापि रात्रिमपि "कालाध्वनोः–" इत्यन्तसंयोगे द्वितीया । "तुयि वुत्तमणोरहाइं" इति क्वचित्पाठः । तत्पक्षे त्वयि वृत्ताः जाताः मनोरथ अभिलाषाः येषां तानि। एकान्ततस्त्वत्समागमकाङ्क्षीणीत्यर्थः । अनेनाङ्गानां पारवश्यमुक्तम् । बलवत् अधिकं तपति । अत्र न जाने तपतीति वर्तमानार्थकलकारेणाद्यापि त्वच्चित्तवृत्तिर्नावगम्यते मदनस्तु मां तपतीत्यनुभूयमानदशादुस्सहत्वं द्योत्यते । त्वयि युक्तमनोरथानीत्यनेन त्वत्सौन्दर्यजितो मदनस्त्वां प्रति किमपि कर्तुमशक्नुवन् त्वयि साभिलाषाणि ममाङ्गानि बलवत्तपतीति प्रत्यनीकालङ्कारो ध्वन्यत इति वस्तुनालङ्कारध्वनिः ॥ १६ ॥

**तपतीति** । हे तनुगात्रि, तनूनि कृशाणि गात्राणि यस्याः तस्याः सम्बोधनं "अङ्गगात्र कण्ठेभ्यः" इति ङीप् । वस्तुतस्त्वस्य वार्तिकस्य भाष्यानुक्तत्वेनाप्रामाणिकत्वमिति सिद्धान्तात्कवीनां निरङ्कुशत्वेन समाधेयम् । हे कृशाङ्गि । इदं च सम्बोधनं विरहतापातिशयात्त्वद्गात्रमतिकृशतामापन्नमिति राज्ञः शकुन्तलायां दयोत्पत्तिं सू-

**सख्यौ**—(विलोक्य सहर्षम् ।) साअदं[1] अविलम्बिणो मणोररुस्स ।

(शकुन्तलाभ्युत्थातुमिच्छति ।)

**राजा**—अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १८ ॥

**अनसूया**—इदो[2] सिलातलेक्कदेसं अलंकरेदु वअस्सो ।

---

१. स्वागतमविलम्बिनो मनोरथस्य ।

२. इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

---

चयति । मदनस्त्वां तपति । तव तनुगात्रत्वात्स्त्रीत्वाच्च सन्तापमात्रं जनयति न मामिव दहतीति भावः । मां पुनः मां तु अनिशं सर्वदा । निशाव्यतिरिक्तसमयेपीत्यर्थः दहत्येव । तव कृशगात्रतां स्त्रीत्वं चोदीक्ष्य मदनस्तव तापमात्रं करोति । मम त्वचलवद्धीरप्रकृतितया केवलतापकरणे पुनर्जीविष्यतीत्यतो मां भस्मीकरोतीत्यर्थः । ननु यद्युभयोरप्यावयोः समोऽयं मदनाख्यो रिपुः तर्हि एकस्मिन्कथं सदय इत्यमुमाक्षेपं कविर्दृष्टान्तमुखेन समाधत्ते ग्लपयतीति । दिवसः दिवा यथा येन प्रकारेण शशाङ्कं चन्द्रं ग्लपयति विच्छायं कृत्वा तस्य स्वरूपमपि सदसत्संशयगोचरं करोति तथा तद्वत् कुमुदान्यस्यां सन्तीति कुमुद्वती । "कुमुदनडवेतसेभ्यो ड्मतुप्" । तां यद्यप्ययंप्रत्ययः "तदस्मिन्नस्ति" इतिदेशे तन्नाम्नीत्यधिकारे विहित इति देशस्य विशेष्यत्व एव प्रवर्तते । तथाप्यभियुक्तप्रयोगवहुलत्वात्कुमुदलतायामपि प्रवर्तते । तदुदयास्तमयाभ्यां विकाससंकोचवर्तीं कुमुदिनीं न ग्लपयति न तथा विच्छायतां कृत्वा स्वरूपं नाशयति । किंतु संकोचमात्रं जनयतीत्यर्थः । अत्र चन्द्रस्यापि तमोनिरोधकत्वसामर्थ्याद्दिवसस्य स्ववलानुरूपः प्रतिभटो वर्णित इति ज्ञेयम् । मदनः कमिनं यथा वाधतेनतन्था कामिनीमित्यय मनुभवसिद्धइति भावः दृष्टान्तालङ्कारः । आर्या वृत्तम् ॥ १७ ॥

**सन्दष्टेति** । सन्दष्टं सम्यङ्मृदितम् । अवमर्दनं ग्लानिमापादितमिति यावत् । कुसुमशयनं पुष्पमयी शय्या यैस्तानि तथा आशु शीघ्रम् । भङ्गापेक्षया आश्वित्युक्तम् । क्लान्ताः ये विसस्य मृणालस्य भङ्गाः खण्डाः तैः सुरभीणि सुगन्धीनि । संक्रान्तमृणालसौरभाणीत्यर्थः । अत्र क्रियावाचिना भङ्गशब्देन तद्वान्पदार्थो लक्ष्यते । "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति न्यायात् । गुरुर्महान्परितापस्सन्तापो येषां तानि ते तव गात्राणि अङ्गानि । "गात्रमङ्गे कलेवरे" इति विश्वः ।

(राजोपविशति । शकुन्तला सलज्जा तिष्ठति ।)

प्रियंवदा—दुवेणं णु वो अण्णोण्णाणुराओ पच्चक्खो । तहवि सहीसिणेहो मं पुणरुत्तवादिणिं करेदि ।

राजा—भद्रे, नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—आवण्णस्स विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

राजा—नास्मात्परम् ।

प्रियंवदा—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

राजा—भद्रे, साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—(प्रियंवदामवलोक्य ।) हला, किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण

राजा—

इदमनन्यपरायणमन्यथा

हृदयसंनिहिते हृदयं मम ।

---

१. द्वयोर्ननु युवयोरन्योन्यानुरागः प्रत्यक्षः । तथापि सखीस्नेहो मां पुनरुक्तवादिनीं करोति ।

२. आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः ।

३. तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् ।

४. हला, किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ।

---

उपचारं शिष्टाचारानुगतमभ्युत्थानादिसत्कारं नार्हन्ति न तदनुष्ठाने प्रभवन्तीत्यर्थः काव्यलिंगमलङ्कारः ॥ १८ ॥

अभ्युपपत्त्या अनुग्रहेण । अयं प्रणयः इयमभ्यर्थना साधारणः आवयोरुभयोस्समानः । यथा भवतीभिरहमेतदर्थमभ्यर्थ्यस्तथामयापितदर्थं भवत्यौ प्रार्थनीये इति भावः ।

इदमिति । हे हृदयसन्निहिते, हृदयस्य मच्चित्तस्य सन्निहिता समीपवर्तिनी

यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽपि हतः पुनः ॥ १९ ॥

अनसूया—वअस्स, बहुवल्लहा राआणो सुणी अन्ति। जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिव्वत्तेहि।

राजा—भद्रे, किं बहुना।
परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररशना चोर्वीसखी च युवयोरियम् ॥ २० ॥

---

१. वयस्य, बहुवल्लभा राजानः श्रूयन्ते। यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय।

---

तत्सम्बोधनम्। मया सर्वदा ध्यात इत्यर्थः। इदं त्वदवस्थितं अत एव अनन्यपरायणं अन्यत्परायणं यस्य तन्न भवति तथोक्तं अनन्यासक्तम्। अत्रान्यशब्दो लिंगसामान्यनपुंसकवचनः। अन्यवस्तुमात्रपरायणं न भवतीत्यर्थः। तेनारतिर्नाम मदनावस्थोक्ता॥ "परायणमभीक्ष्णे स्यात्तत्पराश्रययोरपि" इति मेदिनी। तादृशं मे मनः मम हृदयं अन्यथा प्रकारान्तरेण यदि समर्थयसे "तव न जाने" इत्यादिना त्वय्यनुरागरहितं प्रकटयसि चेदित्यर्थः। तदेति शेषः। हे मदिरेक्षणे, मदिरेक्षणेति व्याख्यातचरम्। मदनस्य मन्मथस्य बाणहतोऽपि विद्धोपि अहं पुनः हतोऽस्मि। त्वदप्राप्त्या मन्मथवाणैः पीड्यमानोऽहमेतावत्पर्यन्तं त्वत्प्राप्त्याशया जीवितमालम्ब्य तिष्ठामि। तादृशं मां यदि त्वमन्यकान्तानुरक्तं मत्वा निराकरोषि तदा वितथमनोरथो हतोऽस्मि मन्दभाग्य इति भावः। द्रुतविलम्बितं वृत्तम्॥ १९॥

परिग्रहेति। परिग्रहाणां पत्नीनाम्। "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः। बहुत्वेऽपि अनेकत्वेऽपि सत्स्वप्यनेकपरिग्रहेष्वित्यर्थः। समुद्रएव रशना मेखला यस्याः सा। समुद्रपर्यन्तेत्यर्थः। उर्वी भूमिः इयं लोकोत्तरलावण्यवती युवयोः सखी शकुन्तला च द्वे उभे अपि नः अस्माकम्। पूजायां बहुवचनम्। कुलस्य वंशस्य प्रतिष्ठे प्रतिष्ठाहेतू भविष्यत इति शेषः। आयुर्घृतमित्यादिवदौपचारिकोऽयं प्रयोगः। चतुरुदधिमेखलाया भूमेराचन्द्रार्कं स्ववंशेन पालनीयत्वात्, तादृशभूपरिरक्षणक्षमचक्रवर्तिवंशोत्पादकपुत्रोत्पादाच्च भूशकुन्तलयोः प्रतिष्ठाहेतुत्वमवेधयम्। अनेन नैषा भोगार्थं परिगृह्यते। किन्तु महिषीत्वेनैव गृह्यते अतः एतज्जनितपुत्रस्यैव साम्राज्यमिति राज्ञा प्रतिश्रुतं भवति॥ २०॥

उभे—णिव्वुदं ह्म ।

प्रियंवदा—(सदृष्टिक्षेपम् ।) अणसुए, एसो इदोदिण्णदिट्ठि उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजाएम णं (इत्युभे प्रस्थिते ।)

शकुन्तला—हला, असरण ह्मि । अण्णदरा वो आअच्छदु ।

उभे—पुहवीए जो सरणं सो तुह समीवे वट्टइ । (इति निष्क्रान्ते ।)

शकुन्तला—कहं गदाओ एव्व ।

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः ।

---

१. निर्वृते स्वः ।

२. अनुसूये, एष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ।

३. हला, अशरणास्मि अन्यतरा युवयोरागच्छतु ।

४. पृथिव्या यः शरणं स तव समीपे वर्तते ।

५. कथं गते एव ।

---

किं शीतलैरिति ॥ शीतलैः शीतस्पर्शैः क्लमं क्लान्तिं विनुदन्ति विशेषेणापनयन्तीति तैः नीलन्याः पद्मिन्याः दलान्येव पत्राण्येव तालवृन्तानि व्यजनानि तैः । अनेन सौगन्ध्यं सूचितम् । अत एव न बिसिनीत्यादिप्रयुक्तम् । अत्र तालवृन्तैरिति बहुवचनेन एकेनैव चिरं वीजने क्लमापनोदनयोग्यता न स्यादिति प्रतिक्षणं भिन्नमेव पर्णमुपादीयत इति भावः । आर्द्रान् जलसम्पर्काच्छीतलान् वातान् वायून् किं सञ्चारयामि यथासुखं सर्वावयवेषु सम्यक्चालयामि किं । यानि स्वयं शीतलानि क्लमच्छिन्दि च तज्जन्यो वायुः सुतरां शीतलः क्लमच्छिचेत्यत्र किं प्रष्टव्यमिति भावः । अत्र लघुभिर्दलैरेव वीजनान्मारुतस्य मान्द्यं चोक्तम् । उत आहोस्वित् । हे करभोरु, मणिबन्धकनिष्ठयोर्मध्यवर्ती बाह्यः करांशः करभः "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । तद्वदूरू यस्यास्तत्सम्बोधनम् । "ऊरूत्तरपदादौपम्ये" इति स्त्रियामूङ् । सम्बुद्धिह्रस्वः । पद्मे इव ताम्रौ पद्मताम्रौ कुशेशयलोहितौ ते तव चरणौ पादौ अङ्के उत्सङ्गे "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः ।

अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ २१ ॥

शकुन्तला—ण[1] माणणीएसु अत्ताणं अवराहइस्सं । (इत्युत्थायगन्तुमिच्छति ।)

राजा—सुन्दरि, अपरिनिर्वाणोयं दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २२ ॥

शकुन्तला—[2]पोरव, रक्ख विणअं । मअणसंतत्तावि ण हु अत्तणो वहवामि ।

---

१. न माननीयेष्वात्मानमपराधयिष्ये ।

२. पौरव, रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि ।

---

निधाय निक्षिप्य यथासुखं सुखमनतिक्रम्य । अनेनास्य पादसंवाहनकौशलं ध्वनितम् । संवाहयामि किं मर्दनेन खेदमपनयामि किम् । अत्र नलिनीदलस्य तालवृन्तत्वारोपे आरोप्यमाणस्य प्रकृतोपयोगित्वात्परिणामालङ्कारः । न चात्र तालवृन्तैरिव नलिनीदलैरित्युपमितसमासे पूर्वपदार्थप्राधान्यादारोपणाभावात्परिणामस्स्यादिति वाच्यम् । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनुशासनेन प्रकृते शीतलैरिति सामान्यधर्मस्य प्रयोगादुपमितसमासस्याप्रसक्त्या मयूरव्यंसकादित्वात्समासे उत्तरपदार्थस्य प्राधान्येनारोपणसम्भवात्परिणामालङ्कारस्यैव न्याय्यत्वात् ॥ वसन्ततिलकं वृत्तम् ॥ २१ ॥

सुन्दरि । इदं च सम्बोधनं एतादृगवस्थायामपि न सौन्दर्यस्य हानिरिति द्योतयति । अपरिनिर्वाणः अप्रशान्ततापः ।

उत्सृज्येति ॥ नलिनीदलैः कल्पितं रचितं स्तनयोरावरणं यस्याः सा त्वं कुसुमशयनं पुष्पशय्यां उत्सृज्य त्यक्त्वा परिबाधापेलवैः विरहव्यथाकृशैः । अङ्गैरवयवैरुपलक्षितासती । "उपलक्षणे तृतीया" । आतपे कथं गमिष्यसि । स्वस्थोऽपि कश्चिदातपे छत्रादिरहितो वहिर्गन्तुमसमर्थः । त्वं तु स्वभावतस्सुकुमाराङ्गी तत्रापी-

राजा—भीरु, अलं गुरुजनभयेन । श्रुत्वाऽपि विदितधर्मा तत्रभवान्नात्र ते दोषं गृहीष्यति कुलपतिः । अपि च ।

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २३ ॥

शकुन्तला—मुञ्च दाव मं । भूओ वि सहीजणं अणुमाणइस्सं ।

राजा—भवतु । मोक्ष्यामि ।

शकुन्तला—कॅदा ।

---

१. मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्यामि ।
२. कदा ।

---

दृगवस्था । अतः नलिनीपत्रादि हित्वा बहिर्गन्तुं सुतरामशक्तेति कथंशब्दार्थः आर्यावृत्तम् ॥ २२ ॥

विदितधर्मा श्रुतिस्मृत्याचाराभिज्ञः "धर्मादनिच्केवला" दित्यनिच् अत्रास्मिन् सङ्गमे ।

अथ दुष्यन्तः गुरुजनभीत्याभिसरणभीरुकां शकुन्तलां दृष्टान्तेन समाधत्ते—गान्धर्वेणेति । अनुरक्तयोर्वधूवरयोरन्योन्येच्छया निर्वृत्तो विवाहो गान्धर्वः । यथाह मनुः—"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयः" इति । गन्धर्वाणामिव निर्वर्त्यत इति तत्संज्ञा । गन्धर्वाणां हि वधूवरयोरन्योन्येच्छयैव विवाहो निर्वर्त्यत इति प्रसिद्धिः । तेन विवाहेन परिणीताः ऊढाः बह्व्यः अनेकाः । न तु त्वमेकैवेति भावः । राजर्षिकन्यकाः श्रूयन्ते । अनेन तवापि राजर्षेर्विश्वामित्रस्य कन्यकात्वाद्गान्धर्वविवाहो युक्त एवेति भावः । ताः पितृभिरभिनन्दिताश्च । अत्र परिणीताः कन्यकाः श्रूयन्ते पुराणादिष्विलर्थकल्पया श्रवणकर्मत्वं कन्यकानामेव । तद्विषये श्रवणेन्द्रियव्यापारस्यानन्वयात्तत्कर्मकपरिणयाभिनन्दनयोरेव पर्यवसानमिति ज्ञेयम् । केचित्त्वेवं योजयन्ति । बह्व्यो राजर्षिकन्यकाः परिणीताः पितृभिरभिनन्दिताश्च इति श्रूयन्त इति । तदसङ्गतं । तथा सति वाक्यार्थस्य कर्मत्वे तस्यैकत्वेन श्रूयन्त इति बहुवचनासङ्गतिः । अतः उक्तरीत्यान्वयः कार्यः ॥ २३ ॥

राजा—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २४ ॥

(इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला नाट्येन परिहरति ।)

(नेपथ्ये ।)

[1]चक्कवाकवहुए, आमन्तेहि सहअरं । उवट्ठिआ रअणी ।

शकुन्तला—(ससंभ्रमम् ।) पोरव, असंसअं मम सरीरवुत्तन्तो-वलम्भाअं अज्जा गोदमी इदो एव्व आअच्छदि । जाव विडवन्तरिदो होहि ।

---

१. चक्रवाकवधूः, आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।

२. पौरव, असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत प्रवागच्छति । यावाद्विटपनतिरितो भव ।

---

अपरिक्षतेति ॥ अपरिक्षतं वातादिनानुपहतं कोमलं सुकुमारं च तादृशस्य नवस्य नूतनस्य । सद्यो विकसितस्येत्यर्थः । कुसुमस्य रसः मकरन्दः । पिपासता पातुमिच्छुना । तद्रसपानलोलुपेनेति यावत् । षट्पदेनेव पिपासता तावकाधरपानासक्तेन मया परिक्षत· दशनसन्दष्टः । स न भवतीत्यपरिक्षतः । अनधिगतदशनक्षतव्रण इत्यर्थः । स चासौ कोमलश्च मृदुलश्च । विशेषणसमासः । तस्य नवस्य प्रथमास्वाद्यस्य ते तव अस्य अधरस्य । इदंशब्देनाधररसास्वादनेतादात्विकप्रवृत्ति स्सूच्यते ॥ अधरस्य कुसुमोपमानेनात्यन्तमार्दवं तद्रसमाधुर्यातिशयः स्पृहणीयत्वं च ध्वन्यते ॥ रसः सदयं यथा तथा यावद्गृह्यते ग्रहीष्यते । "यावत्पुरानिपातयोर्लट्" इति यावद्योगे भविष्यदर्थे लट् । तदनन्तरं मोक्ष्यामीति पूर्ववाक्येणान्वयः । अत्र दुष्यन्तस्योपमानं भ्रमरः तेन यथा भ्रमरस्य कुसुमरसास्वादनवैदग्धी तथा दुष्यन्तस्य लोकोत्तरस्त्रीसंभोगचातुरीति ज्ञाप्यते । तथा अधरस्योपमानं कुसुमं तेन मार्दवातिशयो व्यज्यते । उपमालङ्कारः । औपच्छन्दसिकं वृत्तम् ॥ २४ ॥

चक्रवाकवधूरिति ॥ अनेनशकुन्तले प्रियमापृच्छस्व गौतम्युपस्थितेतिसूच्यते । अपीति प्रश्ने लघुसन्तापानिलघुः आल्पः सन्तापः येष्टतानि

**राजा**—तथा । (इत्यात्मानमावृत्य तिष्ठति ।)

(ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च ।)

**सख्यौ**—इदो इदो अज्जा गोदमी ।

**गौतमी**—(शकुन्तलामुपेत्य ।) जादे, अवि लहुसंदावाइं दे अङ्गाइं

**शकुन्तला**—अत्थि मे विसेसो ।

**गौतमी**—ईमिणा मंदिद दब्भोदएण णिरावाधं एव्व दे सरीरं भविस्सदि । (शिरसि शकुन्तलामभ्यक्ष्य ।) वच्छे, परिणदो दिअहो । एहि । उडजं एव्व गच्छह्म ।

(इति प्रस्थिताः ।)

**शकुन्तला**—(आत्मगतम ।) हिअअ, पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहडिअस्स कहं दे संपदं संदावो । (पदान्तरे स्थित्वा । प्रकाशम् ।) लदावलअ संदावहर, आमन्तेमि तुमं भूओ वि परिभोअस्स । (इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः ।)

**राजा**—(पूर्वस्थानमुपेत्य । स निःश्वासम् ।) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।

---

१. इत इत आर्या गौतमी ।

२. जाते, अपि लघुसंतापानि तेऽङ्गानि ।

३, आस्ति मे विशेषः ।

४. अनेन मन्त्रितदर्भोदकेन निरावाधमेव ते शरीरं भविष्यति । वत्से, परिणतो दिवसः । एहि । उटजमेव गच्छामः ।

५. हृदय, प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविघटितस्य कथं ते सांप्रतं संतापः । लतावलय संतापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय ।

---

**मुहुरिति** ॥ मुहुर्वारंवारं अङ्गुलिभिः संवृत आच्छादितः अधरोष्ठो यस्मिन् तत्तथोक्तम् । अधरोष्ठमित्यत्र "ओत्वोष्ठयोः समासे वा" इति विकल्पात्

मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २५ ॥

क्व नु खलु संप्रति गच्छामि । अथवा । इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि । (सर्वतोऽवलोक्य ।)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।

---

पररूपत्वम् ॥ न चात्राधरमात्रस्य ग्रहण ओष्ठपदस्यानर्थकत्वमिति शंक्यं । विशिष्टार्थवाचकानां पदानां विषेष्यसमभिव्याहारे विशेषणमात्रपरत्वादधरशब्दस्याधोदेशवृत्तिमात्रपरत्वं । यथा मेघसन्देशे "परिणतगजप्रेक्षणीयं ददर्श" इत्यत्र तिर्यग्दन्तप्रहारिगजवाचकपरिणतपदेनैव सिद्धे गजपदम् ॥ अधरश्चोष्ठश्च तयोस्समाहारः अधरोष्ठमिति व्याख्यानमसङ्गतं । उत्तरोष्ठस्यानास्वाद्यत्वेन तद्ग्रहणेऽसामञ्जस्यात् । किञ्च ओष्ठशब्दस्याल्पाच्तरत्वात्पूर्वनिपातापत्तिः । तथा प्रतिषेधाक्षरैः अलमलमित्यादिनिषेधवचनैर्विक्लवं विह्वलम् । दीनमितियावत् । अत एव अभिरामं मनोज्ञं नायिकायामुग्धात्वात्तात्कालिकसुरतप्रस्तावाङ्गीकारे मुखदैन्यस्य स्वारसिकत्वात् । नेदं दीनत्वं करुणकृतम् । अपि तु लज्जाभयकृतमेव ॥ किंच अंसयोर्विवर्तितुं शीलं यस्य तत् । चुम्बनपरिहारार्थं भुजशिरसोर्विवर्तीत्यर्थः । एवंभूतं । पक्ष्म नेत्ररोमावली अस्त्यनयोरिति पक्ष्मले प्रशस्तपक्ष्मयुक्ते । सिध्मादित्वान्मत्वर्थीयो लच्प्रत्ययः । अक्षिणी दृशौ यस्यास्तस्याः । शकुन्तलयाः मुखमाननं कथमपि महता प्रयत्नेन । तदुक्तम्—"ज्ञातहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादितदाप्यन्तं यत्नगौरववाढयोः" इति । उन्नमितं चुम्बनार्थमुत्क्षिप्तं । तु किन्तु न चुम्बितं । अत्र न चुम्बितमिति चुम्बनस्यैवालाभकथने "दुष्यन्तेनाहितं तेजोदधानां भूतये भुवः" तथा "पीतं मया सदयमेव रतोत्सवेषु" इत्याद्युक्तिः कथं संगच्छत इति चेत् । उच्यते । "संरोधं भोजनं स्नानं सुरतं चानुलेपनम् । अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्" इति नाटके सुरताद्यभिनयस्यानौचित्यादनौचित्यभङ्गभीरुणा महाकविना पूर्ववाक्ये "लतावलयसंतापहर आमन्त्रये त्वां भूयोऽपि परिभोगाय" इत्यनेन भावी निर्विघ्नोपभोगः सूचित इति न काप्यनुपपत्तिः । मुग्धास्वभावोक्तिः ॥ २५ ॥

तस्या इति ॥ शिलायां इयं पुरोवर्त्येतत् तस्याः शकुन्तलायाः शरीरं सन्तप्तदेहः । अत्र शरीरस्य सन्तप्तत्वं प्रकरणलभ्यमिति तन्नोक्तम् । तेन लुलिता पदि-

हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा नवेतसगृहाच्छक्नोमि शून्यादपि ॥ २६ ॥

(आकाशे ।)

राजन्,

सायंतने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।

---

मृदिता पुष्पमयी पुष्पैः प्रचुरा "तत्प्रकृतवचने मयट्" इति प्राचुर्यार्थे मयट् । कुसुमात्मिकेतियावत् । शय्या शयनम् । एषः इदम् । अत्र एषशब्दस्समीपवर्तित्वं वदन् मदनलेखस्य स्वोद्दशत्वेन प्रियालिखितत्वेन च हृद्यतरत्वं द्योतयति । उक्तंच— "इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदोरूपं" इति । अतएव नान्वादेशः । नलिन्याः पद्मिन्याः पत्रे दले नखैरर्पितः । नखलिखितैरक्षरैर्विन्यस्तः क्लान्तः म्लानः मन्मथस्य लेखः मदनसम्बन्धि पत्रम् । इदं हस्ताद्भ्रष्टं च्युतं बिसाभरणं मृणालवलयं । इति एवं आसमन्तात्सज्यमानं आसक्तिं गच्छत् "कर्मकर्तरि यक्" ईक्षणं चक्षुर्यस्य सः । अत्र आसज्यमानेति शानचा आसंगस्याविरामः सूच्यते । तथोक्तः अहं शून्यादपि शकुन्तलाविरहितादपि । अपिशब्देन यत्र तदुपभोगचिह्नान्यत्यन्तं मनो रमयन्ति तत्र सा यदि किमु वक्तव्यमिति द्योत्यते । वेतसगृहात् वेतसपरिक्षिप्ताल्लतामण्डपात् सहसा बलादपि निर्गन्तुं न शक्तोऽस्मि । अत्र निर्गमनकारणस्य शून्यत्वस्य सत्वेपि तदभावकथनाद्विशेषोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

**सायन्तन** इति । सायन्तने सायंकालिके "सायं चिरम्" इत्यादिना ट्युल् तुडागमश्च । सवनकर्मणि यज्ञकर्मणि संप्रवृत्ते यथाविधि कर्तुं समारब्धे सति हुतं स्वस्मिन् प्रक्षिप्तं पुरोडाशादिकं अशनं यस्य सः हुताशनः अग्निः सोऽस्यां अस्तीति हुताशनवती प्रज्वलदनला तादृशीं वेदिं परितः । यज्ञभूमेस्समन्तादित्यर्थः । "अभितः परितः" इत्यादिना वेदिमिति द्वितीया । प्रकीर्णाः विक्षिप्ताः बहुधा बहुप्रकारेण भयमादधानाः उत्पादयन्त्यः सन्ध्यापयोदवत् सायंकालजलदवत् कपिशाः कपिशवर्णाः पिशितं मांसं अशनं आहारो येषां ते पिशिताशनास्तेषां नभोवर्त्मना

छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥ २७ ॥

राजा—अयमयमागच्छामि । (इति निष्क्रान्तः ।)

इति श्रीमहाकविकालिदासकृतावभिज्ञानशाकुन्तले तृतीयोऽङ्कः ।

---

संचरमाणानां राक्षसानां छायाः प्रतिबिम्बानि चरन्ति । घृतादिपात्रेषूद्वेल्लन्त्यो दृश्यन्त इति भावः । वसन्ततिलकं वृत्तम् ॥ २७ ॥

इति श्रीदुग्धापगादक्षिणतीरस्थितविरिञ्चिपुराभिजन-
श्रीरामसुधीवरतनूभवशङ्करविरचितायाम-
मभिज्ञानशाकुन्तलव्याख्यायां विद्व-
न्मनोरमाख्यायां तृतीयोऽङ्कः ।

---

## चतुर्थोऽङ्कः ।

(ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ।)

**अनसूया**—[1]पिअंवदे, जइ वि गन्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्दला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।

**प्रियंवदा**—[2]कहं विअ ।

**अनसूया**—[3]अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।

**प्रियंवदा**—[4]वीसद्धा होहि । ण दादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । तादो दाणीं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

**अनसूया**—[5]जह अहं देक्खामि, तह तस्स अणुमदं भवे ।

---

१. प्रियंवदे, यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ।

२. कथमिव ।

३. अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति ।

४. विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

५. यथाहं पश्यामि, तथा तस्यानुमतं भवेत् ।

---

निर्वृत्तकल्याणा निष्पन्नमङ्गला । निर्वृतम् सुखितम् । विस्रब्धाभवविश्वासयुक्ताभव । अनेनदुष्यन्तविषये वञ्चनाविस्मरणादिकं नसम्भाव्यत इति भावः ॥ किम्प्रतिपत्स्यते किं मंस्यते । सौभाग्यदेवता भर्तृवशीकरणायाराधनीया गौर्यादीष्टदेवता । हृदयेन असन्निहिता शून्यहृदया राजर्षिगतचित्तेत्यर्थः ।

प्रियंवदा—[1]कहं विअ ।

अनसूया—[2]गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो ।

प्रियंवदा—(पुष्पभाजनं विलोक्य ।) [3]सहि, अवइदाइं खु बलिकम्म-पज्जत्ताइं कुसुमाइं ।

अनसूया—[4]णं सहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ ।

प्रियंवदा—[5]जुज्जदि ।

(इति तदेव कर्मारभते ।)

(नेपथ्ये ।)

अयमहं भोः ।

अनसूया—(कर्णं दत्त्वा ।) [6]सहि, अदिधीणं विअ णिवेदिदं ।

प्रियंवदा—णं [7]उडजसंणिहिदा । सउन्दला । (आत्मगतम् ।) अज्ज उण हिअएण असंणिहिदा ।

अनसूया—[8]होदु । अलं एत्तिएहिं कुसुमेहिं ।

(इति प्रस्थिते ।)

---

१. कथमिव ।

२. गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ।

३. सखि, अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि ।

४. ननु सख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया ।

५. युज्यते ।

६. सखि, अतिथीनामिव निवेदितम् ।

७. ननूटजसंनिहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता ।

८. भवतु । अलमेतावद्भिः कुसुमैः ।

(नेपथ्ये ।)

आः अतिथिपरिभाविनि,
विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि स-
न्कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

---

विचिन्तयन्तीति ॥ नास्त्यन्यस्मिन्मानसं यस्याः सा तथाभूता सती यं पुरुषं विचिन्तयन्ती विशेषेण स्मरन्ती । अनेन नायकस्मरणेऽपि तत्संपर्कसुखानुभवो विद्यत इति ध्वन्यते । अत एव विचिन्तयन्तीत्युक्तम् । उक्तं च मालतीमाधवे । "यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधीक्षणदाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः" इति । तादृशी त्वमिति शेषः । उपस्थितं सन्निहितं । अनेन निकटवर्तिनः स्वस्य सत्काराकरणेऽनादर एव हेतुरिति शापदाने कारणमुक्तम् । तपसां ब्रह्मचर्यादीनां निधिं शेवधिम् । निधीयतेऽस्मिन्निति निधिः । "कर्मण्यधिकरणे च" इत्यधिकरणे किप्रत्ययः । अनेनावश्यमभ्यर्हणीयत्वं ध्वनितम् । मां अतिकोपनतया लोके सुप्रसिद्धं न वेत्सि न जानासि । न वेत्सीति वर्तमानप्रयोगेणैतावत्पर्यन्तमपि मदागमनं त्वया न ज्ञायत इति कोपावेगस्य प्रतीत्या शापदानस्य शीघ्रस्फूर्तिकत्वं व्यज्यते । अत इति शेषः । सः त्वच्चिन्ताविषयीभूतो दुष्यन्तः बोधितोऽपि त्वया तत्समीपं गत्वा तेन तेन स्मारकलिङ्गेन सम्यक्प्रत्यभिज्ञापितोऽपि । अपिशब्देन स्वयं तु न स्मरिष्यत्येव किंतु त्वया ज्ञापितोऽपि नैव स्मरिष्यतीति व्यज्यते । त्वां पूर्वानुभूतां तदेकमानसां त्वां न स्मरिष्यति । मच्छापबलादिति शेषः । न त्वन्तःपुरस्त्रीगणापहृतचित्तत्वेन चिरविश्लेषेण वेत्यर्थः । यथा मया बोध्यमानापि त्वं निकटवर्तिनं मां न वेत्सि तथा त्वां दुष्यन्त इति भावः । अत्रोऽपमामाह—कथामिति । प्रमत्तः प्रकर्षेण मत्तः । सुरापनादिना नितरां विचेतन इतियावत् । पुमान् प्रथमं अप्रमाददशायां कृतां अन्येन प्रवर्तितां कथामिव संभाषणमिव । यथा मदनीयद्रव्यसेवया सुतरां विचेतनः कश्चिदप्रमाददशायामन्येनाभिहितां वार्तां पश्चाद्बोधितोऽपि मदवशान्न स्मरति तथा त्वामपि दुष्यन्त इति भावः । केचित्तु प्रमत्तः अवधानरहितः प्रथमं प्रमाददशायामित्यर्थं परिकल्प्य यथानवहितः कश्चित्प्रमाददशायामन्येन प्रवर्तितामनवधानवशात्स्वेनाश्रुतां कथां पश्चात्तेन स्मारितोऽपि न स्मरति तथा त्वामपि दुष्यन्त इति व्याचक्षते । तदसङ्गतम् । तथा सति दुर्वासश्शापप्राप्तेः पूर्वमवधानरहितः शापानन्तरं सावधान इति विरुद्धार्थप्रतीतेः । उपमालङ्कारः । वंशस्थं वृत्तम् ॥ १ ॥

प्रियंवदा—[1]हद्धी । अप्पिअं एव्व संवुत्तं । जस्सिं कस्सि वि पूआरिहे अवरद्धा सुण्णहिअआ सउन्दला । (पुरोऽवलोक्य ।) ण हु जस्सिं कस्सिं वि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअवलुफुल्लाए दुव्वाराए गईए पडिणिवुत्तो । को अण्णो हुदवहादो दहिदुं पहवदि ।

अनसूया—[2]गच्छ । पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं गेह्णि उपसप्पामि ।

प्रियंवदा—[3]तह । (इति निष्क्रान्ता ।)

अनसूया—(पदान्तरे स्खलितं निरूप्य ।) [4]अव्वो । आवेअक्खलिदाए गईए पब्भटं मे अग्गहत्थादो पुप्फभाअणं । (इति पुष्पोच्चयं रूपयति ।)

(प्रविश्य ।)

प्रियंवदा—[5]सहि, पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि किं वि उण साणुक्कोसो किदो ।

अनसूया—(सस्मितम् ।) [6]तस्सिं वहु एदं पि । कहेहि ।

---

१. हा धिक् । अप्रियमेव संवृत्तम् । यस्मिन्कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगवलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति ।

२. गच्छ । पादयोः प्रणम्य निवर्तयैनं यावदहमर्घोदकं गृहीत्वोपसर्पामि ।

३. तथा ।

४. अहो आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् ।

५. सखि, प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । किमपि पुनः सानुक्रोशः कृतः ।

६. तस्मिन्बह्वेतदपि । कथय ।

---

अग्रहस्तात्प्रभ्रष्टंपुष्पभाजनम् । इदं च दुर्वाससश्शापरूपानिष्टप्राप्तिसूचकापशकुनतयोपक्षिप्तम् । सानुक्रोशः सदयः । वामहस्तोपहितवदनेति स्त्रीस्वभावोक्तिः । वेलोपलक्षणार्थम् समयपरिज्ञानार्थम् । प्रकाशं निर्गत उटजाद्बहिरागतः ।

प्रियंवदा—[1]जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए । भअवं, पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजनस्स भअवदा एक्को अवराहो मरिसिदव्वोत्ति ।

अनसूया—[2]तदो तदो ।

प्रियंवदा—[3]तदो मे वअणं अण्णहाभविदुं णारिहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदित्ति मन्तअन्तो सअं अन्तरिहिदो ।

अनसूया—[4]सक्कं दाणिं अस्ससिदुं अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणिअंत्ति सअं पिणद्धं । साहीणोवाआ सउन्दला भविस्सदि ।

प्रियंवदा—[5]सहि एहि । देवकज्जं दाव णिव्वत्तेह्म ।

(इती परीक्रामतः ।)

प्रियंवदा—(विलोक्य ।) [6]अणसूए, पेक्ख दावं । वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि । किं उण आअन्तुअं ।

---

१. यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया । भगवन्, प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति ।

२. ततस्ततः ।

३. ततो मे वचनमन्यथाभवितुं नार्हति । किंत्वभिज्ञानाभरणदर्शनेनशापो निवर्तिष्यत इति मन्त्रयन्स्वयमन्तर्हितः ।

४. शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तमिन्स्वाधीनोपाया शकुन्तला भविष्यति ।

५. सखि, एहि । देवकार्यं तावन्निर्वर्तयावः ।

६. अनसूये, पश्य तावत् । वामहस्तोपहितवदनालिखितेव प्रियसखी । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् ।

अनसूया—[1]पिअंवदे, दुवेणं एव्व णं णो मुहे एसो वुत्तन्तो चिट्ठदु। रक्खिदव्वा क्खु पकिदिपेलवा पिअसही।

प्रियंवदा—[2]को दाणिं उण्होदएण णोमालिअं सिञ्चेदि।

(इत्युभे निष्क्रान्ते)

**विष्कम्भः।**

(ततः प्रविशति सुप्तोत्थितः शिष्यः।)

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन। प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति। (परिक्रम्यावलोक्य च।) हन्त प्रभातम्। तथा हि।

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरःसर एकतोऽर्कः।

---

१. प्रियंवदे, द्वयोरेव ननु नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी।

२. क इदानीमुष्णोदकेन नवमालिकां सिञ्चति।

---

रजन्याः प्रभातप्रायत्वमुपपादयति—यातीति॥ ओषधीनां अतिदुःसहमरणादिविपत्तिसहस्रविनाशकाः फलपाकविनाशिन्यः उद्भिज्जा ओषधयः तासां पतिः पातीति पतिः "पा रक्षणे" इत्यस्मात् "पातेर्डतिः" इत्यौणादिको डतिप्रत्ययः। पुष्टिकारकश्चन्द्रः "ओषधीशो निशापतिः" इत्यमरः। अत्र ओषधीनां पतिरित्युक्त्या प्रतीकारसामर्थ्यशालिपरिजनसत्वेऽपि दैवप्रतिकूल्ये सर्वमनुपयोगीति प्रतीयते। उक्तं च शिशुपालवधे माघेन। "प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता। अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि" इति। एकतः एकस्यां दिशि। पश्चिमभाग इत्यर्थः। सार्वविभक्तिकस्तसिः। अस्तस्य चरमगिरेः शिखरं शृंगं याति प्राप्नोति। अस्तं गच्छतीत्यर्थः। एकतः पूर्वस्यां दिशि अर्कस्सूर्यः आविष्कृतः आविर्भावितः अरुणः गरुडाग्रजः पुरःसरः पुरोगामी यस्य स तथोक्तः इदं विशेषणमुषःकालज्ञापनार्थम्। सूर्यं उदेतीत्यर्थः एवं तेजोद्वयस्य चन्द्रसूर्यरूपस्य। अत्रोक्तक्रमेणैव संख्याप्राप्तौ तेजोद्वयस्येति पुनर्वचनं समानेऽपि

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

---

तेजस्त्वे कस्यचिदस्तं कस्यचिदुदय इति विपाकवैचित्र्यप्रदर्शनार्थमिति ज्ञेयम् । युगपदेकदा । एकदोभयोदर्शनेनैव नियमः कर्तुं शक्यते । नतु क्रमिकदर्शनेनेति युगपदित्युक्तिः । व्यसनोदयाभ्यां तिरोभावाविर्भावाभ्यां विपत्संपद्भ्यां च हेतुभ्यां । लोकः सुखदुःखभाजनं जनः । जातावेकवचनम् । आत्मनः स्वस्य अन्याः दशाः दशान्तराणि । मयूरव्यंसकादित्वात्समासः । तेषु पूर्वदशापेक्षयान्यदशाप्राप्ताविस्यर्थः। विषयसप्तमी । नियम्यत इव विनीयत इव । विपत्संपदोरचिरस्थायित्वात्तयोः प्राप्तयोर्नविकर्तव्यमित्युपदिश्यत इवेत्यर्थः । विधात्रेति कर्तृपदमभ्याहार्यम् । तदुक्तं महाभारते "सुखं च दुःखं यदि वापि जन्तुर्दैवाधीनं विन्दते नात्मशक्त्या । तस्माद्दैवं मलवन्मन्यमानो न संज्वरेन्नापि हृष्येत्कदाचित्" इति । अत्र केचित् "आविष्कृतोऽरुणपुरस्सरः" इति पाठमाद्रियन्ते । तदसङ्गतम् । तथासत्याविष्कृत इति भिन्नपदत्वेऽरुणपुरःसर इति विशेषणं व्यर्थं स्यात् । आविष्कृत इति कर्मणि प्रयोगो भूतार्थकक्तप्रत्ययश्चानन्वितार्थकौ स्याताम् । अत्र पूर्वार्धे प्रतिकूले दैवेऽतिसमृद्धभृत्योऽपि कश्चिन्नाशमुपयाति तथा दैवानुकूलसद्भावे वर्धिष्णुरन्यः स्वाश्रितमसमर्थमप्युदयं लम्भयन्स्वयमुदयं गच्छतीति सत्पुरुषद्वयव्यवहारसमारोपात्समासोक्तिः । तस्याः नियम्यत इवेत्युत्प्रेक्षायाश्चाङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकं वृत्तम् "अस्तशिखरम्" इत्यत्र "अत्युच्छ्रायः पतनहेतुः" इति पाताधिक्यं द्योतयितुं शिखरमित्युक्तमिति शिखरपदप्रयोजनं केचिदाहुः । तन्न चतुरम् । यद्यपि पर्वतशिखराद्युन्नतपदप्राप्तिस्तदनर्हस्य पतनहेतुरेव कालान्तरे । तावता प्रकृते चन्द्रमसोव्यसनोपनिपातस्य तात्कालिकस्यापरिस्फूर्त्या उत्तरार्धे चन्द्रदृष्टान्तेनोत्प्रेक्ष्यमाणस्य धातृकर्तृकलोकोद्देश्यकव्यसननियमनस्यासामञ्जस्यं स्यात् । अपि तु शिखरं यातीत्युत्कृष्टपदप्राप्तिबोधनेन तस्याभ्युदय एव प्रतीयेत । अन्यथा महदधिकारपदमास्थित इत्युक्ते "अत्युच्छ्रायः पतनहेतुः" इति भाविविनाशप्रतीत्या व्यसनस्यैव प्रत्यायनं स्यात् । तच्च लोकानुभवविरुद्धमिति विदितमेव विदुषाम् । अपि च चन्द्रगत्यनुरोधेनास्तशिखरस्योच्छ्रितत्वं न शक्यते निर्णेतुम् । तस्माच्छिखरमित्युक्त्या चन्द्रोऽस्तमेष्यतीति "आविष्कृतारुणे" त्यादिना सूर्य उदेष्यतीतिचाव्यवहितव्यसनोदयप्राप्तिप्रतिपादनं प्रभातत्वनिर्णयश्च संगच्छते । हन्तप्रभातमित्युक्त्या तत्समर्थनायैवास्य श्लोकस्य प्रवृत्तत्वादिति दिक् ॥ २ ॥

अपि च ।

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ३ ॥

(प्रविश्यापटीक्षेपेण ।)

अनसूया—जइ वि णाम विसअपरम्मुहस्स वि जणस्स एदं ण विदिअं तह वि तेण रण्णा सउन्दलाए अणज्जं आअरिदं ।

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि । (इति निष्क्रान्तः ।)

---

१. यद्यपि नाम विषयपराङ्मुखस्यापि जनस्यैतन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम् ।

---

अन्तर्हित इति । शशिनि चन्द्रे अन्तर्हिते व्यवहिते सैव या चन्द्रोदये स्वकुसुमविकासे नयनयोर्निरतिशयसौख्यसंपादयित्री सैवेत्यर्थः प्रक्रान्तप्रसिद्धानुभूतार्थविषयो यच्छब्दस्तच्छब्दं नापेक्षत इत्युक्तं प्राक् । कुमुद्वती कुमुदिनी संस्मर्तुमर्हा संस्मरणीया । "अर्हे कृत्यचश्च" इत्यनीयर् । तादृशी शोभा कान्तिर्यस्यास्तथोक्तासती संकोचवत्तया व्यपगतकान्तिः सतीत्यर्थः । मे दृष्टिं न नन्दयति न प्रीणयति । अमुमेवार्थमर्थान्तरन्यासेनोपपादयति । इष्टस्य प्रियस्य प्रवासः देशान्तरस्थितिः तेन जनितानि उत्पन्नानि प्रियविप्रयोगजानीतियावत् । अबलाजनस्य न बलं यासां ताः अबलाः अल्पबला इत्यर्थः । अल्पार्थे नञ् । ता इति जनः तस्य अबलाजनस्य । मयूरव्यंसकादित्वात्समासः जन इति जातावेकवचनम् । अत्राबलाजनस्येत्यनेन तज्जनस्य तीव्रतापसहनाशक्तौ प्राकट्य प्रतिपादितम् । दुःखानि अतिमात्रमत्यर्थं सुदुःसहानि सुतरां दुः खेन सोढुं शक्यानि "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खल् । अत्र सुदुःशब्दावशक्यानुष्ठानं बोधयतः । अत्र पूर्वार्धे चन्द्रकुमुद्वतीवृत्तान्तेनाप्रस्तुतनायिकानायकव्यवहारप्रतीतेः समासोक्तिः । सा चोत्तरार्धे सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन सङ्कीर्यते । वसन्ततिलकं वृत्तम् ॥ ३ ॥

अनसूया—[1]पडिवुद्धा वि किं करिस्सं । ण मे उइदेसु विणिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु । जेण असच्चसंधे जणे सुउहिअआ सही पदं कारिदा । अहवा दुव्वाससो कोवो एव्वं विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं पि ण विसज्जेदि । ताइदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम । दुक्खसीले तवस्सिजणे को अब्भत्थीअदु । णं सहीगामी दोसो त्ति व्ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं । इत्थंगए अह्मेहिं किं करणिज्जं ।

(प्रविश्य ।)

प्रियंवदा—(सहर्षम् ।) [2]सहि, तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं ।

अनसूया— [3]सहि, कहं एदं ।

---

१. प्रतिबुद्धापि किं करिष्ये । न म उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु । येनासत्यसंधे जने शुद्धहृदया सखी पदं कारिता । अथवा दुर्वाससः कोप एवं विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति । तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्ताय तातकाश्यपाय दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं करणीयम् ।

२. सखि, त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ।

३. सखि, कथमेतत् ।

---

अपटीक्षेपेण यवनिकापनोदनेन हर्षशोकादिजनितसम्भ्रमयुक्तस्य पात्रस्य प्रवेशः अपटीक्षेपेण क्रियत इति कविसम्प्रदायः । अन्यथा "नासूचितस्यपात्रस्यप्रवेशो निर्गमोपि च" इति सहसा पात्रप्रवेशानुपपत्तिः ॥ उचितेष्वति अभ्यस्तेष्वपि । हस्तपादमिति प्राण्यङ्गत्वादेकवद्भावः । सकामः समवाप्तमनोरथः । शुद्धहृदया अरण्यवासितयानभिज्ञातशाठ्या कोऽभ्यर्थ्यताम् कोवस्तिनपुरगमनाय

प्रियंवदा—सुणाहि । दाणिं सुहसइदपुच्छिआ सउन्दलासआसं गदह्मि । तदो जाव एणं लज्जावणवमुहिं परिस्साजिअ तादकस्सवेण एव्वं अहिणन्दिदं दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व आहुदी पडिदा । वच्छे, सुसिस्सवरिदिण्णा विज्जा विअ असोअणिज्जा संवुत्ता । अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमि त्ति।

अनसूया—अह केण सूइदो तादकस्सवस्स अ अं वुत्तन्तो।

---

१. शृणु । इदानीं सुखशयनपृच्छिका शकुन्तलासकाशं गतास्मि । ततोयावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से, सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता । अद्यैव ऋषिरक्षितां भर्तुः सकाशं विसर्जयामीति ।

२. अथ केन सूचितस्तातकाश्यपस्यायं वृत्तान्तः ।

---

प्रार्थ्यताम् । सुखशयनपृच्छिका सुखशयनं जातं किंमितिप्रष्टुम् धूमाकुलितदृष्टेः धूमेन आकुलिताव्याहतादृष्टिर्यस्यतस्य । दिष्ट्येति । अनेन स्वायासंविनैवाभीप्सितानुरूपवरप्राप्तिस्सूचिता । सुशिष्येति । अनेनस्वस्यकृतकृत्यताज्ञाप्यते । अग्निशरणम् अग्निहोत्रगृहम् संस्कृतमाश्रित्येति । इह प्रियंवदया प्राकृतभाषयैवव्यवहर्तव्ये संस्कृतभाषाश्रयणं नविरुध्यते । कार्यवशाद्भाषाविपर्ययस्यानुमतत्वात् । तदुक्तम् "योज्यं विदूषकोन्मत्तवालतापसयोषिताम् । नीचानां षंडकानां च नीचग्रहविकारिणाम् ॥ विद्वद्भिः प्राकृतं कार्यं कारणात्संस्कृतं क्वचित्" । इति अत्रचाशरीरिणीवाण्या यथा श्रुताया अनुवादः संस्कृतभषाशयणं विनानसम्भावतीति संस्कृताश्रयणं कृतमित्यवगन्तव्यम् । मङ्गलसमालम्भनानि मङ्गलसमयोचितव्यविलेपनानि विरचयामिसम्पादयामि । शिखामज्जिता अभ्यक्तस्नाता । नीवारहस्ताभिरिति । मङ्गलकाले शून्यहस्तानामगमनस्यानुचितत्वाद्गृहीततृणधान्यतण्डुलाभिरित्युक्तम् स्वस्तिवाचनिकाभिः पारम्पर्येणाशीरनुसन्धानपराभिः । तापसीभिः तपस्विसुवासनीभिः । अभिनन्द्यमाना आशीर्भिरनुगृह्यमाणा । दुर्लभमिदानीं सखीमण्डनं भविष्यतीत्यनेन भविष्यद्वियोगस्सूचितः । विप्रकार्यते विकृतं क्रियते। विस्मिताः अकस्मादतिरमणीयाभरणदर्शनेन सञ्जातविस्मयाः ।

प्रियंवदा—[1]अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाणिआए । (संस्कृतमाश्रित्य ।)

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥

अनसूया—(प्रियंवदामाश्लिष्य ।) [2]सहि, पिअं मे । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि ।

प्रियंवदा—[3]सहि, वअं दाव उक्कण्ठं विणोदइस्सावो सा तवस्सिणी णिव्वुदा होदु ।

अनसूया—[4]तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्दरक्खमा णिक्खित्ता मए केसरमालिआ । ता इमं हत्थसंणिहिदं करेहि । जाव अहंवि से मअलोअणं तित्थमित्तिअं दुव्वाकिसलआणित्ति मङ्गलसामलम्मणाणि विरएमि ।

---

१. अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या ।

२. सखि, प्रियं मे । किंत्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि ।

३. सखि, आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु ।

४. तेन ह्येतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु । यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

---

दुष्यन्तेनेति ॥ हे ब्रह्मन् ब्रह्मर्षे, भुवः भूमेर्भूतये समृद्ध्यै । अनेन शकुन्तलागर्भस्य पुत्रत्वं चक्रवर्तित्वं षष्ठांशकरग्रहाद्युचितराजधर्मानुष्ठानेन न्यायप्रवर्तकत्वं च ध्वन्यते । दुष्यन्तेन चन्द्रवंशोद्भूतत्वात्परिणययोग्येन भर्त्रा आहितं निषिक्तं तेजः वीर्यम् । अत्र वीर्यमित्यनुक्त्वा तेज इति निगीर्याध्यवसानाद्गर्भस्य तेजस्वित्वं सूच्यते । अत्र दुष्यन्तेनाहितम् तेज इत्यनेन गान्धर्वविवाहः सूचितः । दधानां वहन्तीम् । दधानामिति दधातेः शानच् । यद्यप्यत्र क्रियाजन्यफलस्य भूतिरूपस्य भूगामित्वेन परगामित्वात् परस्मैपदमेवोचितम् । तथापि चक्रवर्तिजननीत्वेन यद्विमलं यशः यश्च तत्प्रयुक्तो निरवधिकानन्दस्तदुभयस्यापि कर्तृगामित्वादात्मनेपदस्य साधुत्वम् । तनयां शकुन्तलां अग्निः गर्भे यस्यास्तां शमीं शमीशाखामिवावेहि अवगच्छ । अत्र शम्युपमानेन विवाहस्य शास्त्रीयत्वं गर्भस्य पावनत्वं च ध्वन्यते । उपमालङ्कारः ॥ ४ ॥

प्रियंवदा—[1]तह करीअदु ।

(अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनोभाजनं गृह्णाति ।)

(नेपथ्ये ।)

गौतमि, आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।

प्रियंवदा—(कर्णं दत्वा ।) [2]अनसूए, तुवरसु । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाअन्ति

(प्रविश्य समालम्भनहस्ता ।)

अनसूया—[3]सहि, एहि गच्छह्म ।

(इति परिक्रामतः ।)

प्रियंवदा—(विलोक्य ।) [4]एसा सुज्जोदए एव्व सिहामज्जिदा णीवारक्खदहत्थाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पह्म णं ।

(इत्युपसर्पतः ।)

(ततः प्रविशति यथोद्दिष्टव्यापाराऽऽसनस्था शकुन्तला ।)

तापसीनामन्यतमा—(शकुन्तलां प्रति ।) [5]जादे, भत्तणो वहुमाणसूअअं महादेईसद्दं लहेहि ।

द्वितीया—[6]वच्छे, वीरप्पसविणी होहि ।

तृतीया—[7]वच्छे, भत्तुणो वहुमदा होहि ।

(इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः ।)

---

१. तथा क्रियताम् ।

२. अनसूये, त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दाय्यन्ते ।

३. सखि, एहि । गच्छावः ।

४. एषा सूर्योदय एव शिखामार्जिता नीवाराक्षतहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् ।

५. जाते, भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

६. वत्से, वीरप्रसवा भव ।

७. वत्से, भर्तुर्बहुमता भव ।

**सख्यौ**—(उपसृत्य ।) सँहि, सुहमज्जणं दे होदु ।

**शकुन्तला**—साँअदं मे सहीणं । इदो णिसीदह ।

**उभे**—(मङ्गलपात्राण्यादाय । उपविश्य ।) हैला, सज्जा होहि । जाव मङ्गलसमालम्भणं विरएम ।

**शकुन्तला**—ईदं पि बहु मन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि त्ति । (इति बाष्पं विसृजति ।)

**उभे**—सँहि ण दे उइअं मङ्गलकाले रोइदुं । (इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ।)

**प्रियंवदा**—आँहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं विआरीअदि ।

(प्रविश्योपायनहस्तौ)

**ऋषिकुमारकौ**—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

(सर्वा विलोक्य विस्मिताः)

**गौतमी**—वँच्छ णारअ, कुदो एदं ।

**प्रथमः**—तातकाश्यपप्रभावात् ।

**गौतमी**—ँकिं माणसी सिट्ठी ।

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

---

१. सखि, मुखमज्जनं ते भवतु ।
२. स्वागतं मे सख्योः इतो निषीदतम् ।
३. हला, सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।
४. इदमपि बहुमन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति ।
५. सखि, न ते उचितं मङ्गलकाले रोदितुम् ।
६. आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विकार्यते ।
७. वत्स नारद, कुत एतत् ।
८. किं मानसी सृष्टिः ।

क्षौमं केन चिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५ ॥

**क्षौममिति** ॥ केनचित्तरुणा मङ्गल्यं मङ्गलकर्मणि साधु "तत्र साधुः" इति यत्प्रत्ययः । अनेनेदं राजगृहगमने स्त्रिया वल्कलधारणमनुचितमिति कान्तिविशेषसंपादनार्थं न दत्तं किं तु मङ्गलार्थमेव वितीर्णमिति ध्वन्यते । "इयमधिकमनोज्ञा वल्कलेनापि तन्वी" इति पूर्वमुक्तत्वात् । वक्ष्यति चाग्रे "परिधेहि संपदं खोमजुअलं" इति । तथा इन्दुपाण्डुचन्द्रवच्छुभ्रवर्णम् अनेन प्रत्यग्रवर्णत्वं क्षालनादिनैरपेक्ष्येण धारणयोग्यत्वं च सूच्यते । तथाभूतं क्षौमं क्षुमाया विकारः "तस्य विकारः" इत्यण् । दुकूलं आविष्कृतं उद्भावितम् । दत्तमितियावत् । चरणयोः पादयोः उपभोगः रञ्जनाद्यलङ्कारः सुलभः यस्मात्सः । उद्देश्यविधेयभाव आश्रयाश्रयिभावो वा संबन्धष्षष्ठ्यर्थः । यद्वा । चरणयोरुपभोगे सुलभः योग्यः सुखेन पादालङ्करणार्ह इतियावत् । चरणयोरुपभोगश्चरणोपभोग इति चरणपदस्य सप्तम्यन्तत्वं परिकल्प्य "सप्तमी" इति योगविभागात्समासः । अनेन बहुप्रयत्नलभ्यचरणलेपनसामग्रीसुखेन लब्धेति व्यज्यते । लाक्षारसः अलक्तकद्रवः केनचित्अन्येन तरुणा निष्ठ्यूतः उद्गीर्णः दत्त इति यावत् । निष्ठ्यूतादिशब्दानां मुख्यवृत्त्याग्राम्यत्वेऽपि गौणवृत्त्याश्रयणान्निरवद्यत्वमुक्तं प्राक् । अन्येभ्यस्तरुभ्यः उत्थानक्रियापेक्षयान्येभ्य इत्यापादानत्वम् आ पर्वभागादापर्वभागम् । "आङ्मर्यादाभिविध्यो" रिति मर्यादार्थकस्याङः पञ्चम्यन्तेनाव्ययीभावः पर्वभागं मर्यादीकृत्य । मणिबन्धावधीतियावत् । उत्थितैः निःसृतैः । अनेन करतलभागमात्रस्य दृश्यत्वकथनेन वनदेवतानामदृश्यत्वं ध्वन्यते । तेषां वृक्षाणां किसलयोद्भेदः पल्लवाङ्कुरः तस्य प्रतिद्वन्द्विभिः प्रतिस्पर्धिभिः रक्ततरत्वकोमलत्वादिगुणयोगात्तत्सदृशैः वनदेवतानां करतलैः कर्तृभिः । अत्र किसलयेति विशेषणावकाशदानाय तलग्रहणमिति वेदितव्यम् । आभरणानि तत्तदवयवधारणार्हाणि भूषणानि दत्तानि वितीर्णानि । अत्राभरणानां वनदेवताकरतलदत्तत्वस्य कथनेन तस्याः सौमङ्गल्यसौभाग्ये आभरणानामनर्घत्वं च द्योत्यते । अत्र पूर्वार्धे वृक्षाणां सेवासूचनं उत्तरार्धे वनदेवतानामनुग्रह इति वेदितव्यम् ॥ किसलयोद्भेदप्रतिद्वंद्विभिरित्यत्र किसलयोद्भेदः पल्लवोद्गमस्तस्य प्रतिद्वंद्विभिः प्रतिस्पर्धिभिः तत्सदृशैरिति यावदिति केषाञ्चिद्व्याख्यानं न चतुरं । वनदेवताकरतलरूपपदार्थस्य पल्लवोद्गमरूपक्रियासादृश्यासम्भवात् । अतः उद्भेदपदेन तदाश्रयोऽङ्कुरो

**प्रियंवदा**—(शकुन्तलां विलोक्य ।) हला, इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छी ।[1]

(शकुन्तला व्रीडां रूपयति ।)

**प्रथमः**—गौतम, एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा ।

(इति निष्क्रान्तौ ।)

**सख्यौ**—अए, अणुवजुत्तभूसणो अअं जणो । तहवि चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेह्म ।[2]

**शकुन्तला**—जाणे वो णेउणं ।[3]

(उभे नाट्येनालंकुरुतः ।)

(ततः प्रविशति स्नानोत्तीर्णः काश्यपः ।)

**काश्यपः**—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।

---

१. हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राज्यलक्ष्मीः ।

२. अये, अनुपयुक्तभूषणोऽयं जनः । तथापि चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः ।

३. जाने वां नैपुणम् ।

---

लक्ष्यते । तेन पल्लवाङ्कुरसादृश्यं लब्धमित्यतिलोहितत्वमतिकोमलत्वञ्च वनदेवताकरतलानां सिद्धमिति ज्ञेयम् ॥ ५ ॥

अनयाभ्युपपत्या क्षौमाद्याविष्करणानुग्रहेण । अनुपयुक्तभूषण इति कदाप्यधृतालङ्कारत्वादपरिज्ञातयथास्थानभूषणविन्यास इत्यर्थः आभरण विनियोगम् आभरणानामुचितस्थानेषु सन्निवेशम् ।

**यास्यतीति** ॥ अद्य अस्मिन्नहनि नत्वधुनैव "अद्यात्राह्नि" इत्यमरः । "सद्यः परु" दित्यादिना द्यप्रत्ययान्तो निपातः । शकुन्तला सुतात्वेनाभिमन्यमाना न तु तनया । पुत्र्यां स्नेहस्य सर्वलोकसिद्धत्वात् । यास्यति पतिगृहं गमिष्यति । न याता नापि याति किन्तु यास्यतीति भविष्यद्व्यपदेशेन तद्गमनवृत्तान्ते मनसि कृत एव

वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६ ॥
(इति परिक्रामति ।)

---

स्वस्य भाविविरहानुचिन्तनजनितवैमनस्यं द्योत्यते । अतएव पतिगृहमिति तन्नामानुच्चारणमपि । इति हेतोः हृदयं सर्वकरणप्रवर्तकं मनः कर्म उत्कण्ठयाभाविविश्लेषाशङ्काजनितगाढचिन्तया कर्त्र्या "चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्नभिध्यातूभयोरपि" इति शब्दार्णवः । हृदयस्य सोत्कण्ठत्वाभावेन्येपामिन्द्रियाणां तत्तद्विषयाग्राहकत्वं न संभवतीति प्रथमं सर्वकरणप्रधानभूतस्य मनसो ग्रहणमिति ज्ञेयम् । संस्पृष्टं सम्यक् स्पृष्टं आक्रान्तम् । हृदयं सावेगं जातमितियावत् । अत्र हृदयमुत्कण्ठामधिगच्छतीति सर्वेन्द्रियप्रवर्तकस्य सर्वपदार्थगोचरीकरणसमर्थस्य क्रियासिद्धौ स्वतन्त्रत्वेन विवक्षितस्य मनसः कर्तृत्वे तादृशमनोविषयीभवनयोग्याया उत्कण्ठायाः कर्मत्वे च वक्तव्ये व्यत्ययेन प्रतिपादनं उत्कण्ठा प्रमाणातीता कर्तृव्यापारमन्तरेण स्वयमेव मनः प्रविशतीति तस्या उत्कटत्वनिरूपणार्थम् । ततश्च तत्कर्तृकस्पर्शनिरूपितकर्मत्वं च मनस इति प्रयोगस्य निर्बाधत्वं सिद्धम् । अनेन शकुन्तला यास्यतीति गमनचिन्तामात्रेणैव चिरतरविरहोत्तरभाविनी महत्युत्कण्ठा हृदयं सावेगं करोतीत्यन्तरिन्द्रियस्य पारवश्यकथनादाश्चर्यं द्योत्यते । कण्ठः कण्ठस्वरः । "कण्ठे गले संनिधानेध्वनौ मदनपादपे" इति विश्वः । स्तम्भिता वाष्पमोचनममङ्गलमिति धिया निरुद्धा या बाष्पाणां वृत्तिः प्रसरः । निःसरणमिति यावत् । तया कलुषः रुद्धस्वरः जात इति शेषः । वाष्पाणां स्तम्भितत्वे निमित्तं पुरुषगतधैर्यम् । अनेन वैस्वर्यमुक्तम् । दृश्यतेऽनेनेति दर्शनं चक्षुः करणे ल्युट् । चिन्ताजडं चिन्तया शकुन्तलागमनविषयया जडं विषयग्रहणाशक्तम् । जातमिति शेषः । वाष्पपूरोद्गमेन चक्षुषो दर्शनव्यापारः प्रतिषिद्धः । मनसश्चिन्ताग्रस्तत्वेन विषयाग्राहकत्वे दर्शनस्यापि तदभावः सुव्यक्तः । अरण्यं वनं ओकः स्थानं यस्य तस्य मम तावत् ममापि वीतरागस्यापीत्यर्थः । स्नेहात् प्रीतिविशेषात् न तु जन्यजनकभावसंबन्धात् । अनेन पुत्रीविश्लेषजन्यत्वे का कथेति व्यज्यते । ईदृशं अनुभूयमानमनिर्वचनीयं वैक्लव्यं विह्वलत्वं इन्द्रियपारवश्यमितियावत् । वर्तत इति शेषः । अहो इत्याश्चर्ये । गृहिणः गृहाश्रमनिवासिनः तद्दुःखाभिज्ञा इति भावः । नवैः प्रथमोत्पन्नैः । इदं च विशेषणं पीडातिशयद्योतनार्थम् । द्वितीयवारादौ पूर्वानुभूतत्वात्किंचित्सोढव्यं भवेदिति नवैरित्युक्तं । तनयायाः पुत्र्याः न तु केवलं पोषिताया एव । विश्लेषः वियोगस्तेन हेतुना दुःखैः व्यथाभिः कथं केन प्रकारेण

सख्यौ—हंला सउन्दले, अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं ।

(शकुन्तलोत्थाय परिधत्ते ।)

गौतमी—जादे, एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

शकुन्तला—(सव्रीडम्) तांद, वन्दामि ।

काश्यपः—वत्से,

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ७ ॥

---

१. हला शकुन्तले, अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगुलम् ।

२. जाते एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

३. तात, वन्दे ।

---

पीड्यन्तेनु पीडिता भवन्तिनु । नुः वितर्के "नुः प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः" इति हैमः । नास्माभिस्तत्प्रकारो ज्ञायत इति भावः । "कथं न तनयाविश्लेषदुःखैः" इति पाठे कथं न पीड्यन्ते न क्लिश्यन्ते । युक्तमेव ते पीड्यन्त इति काका योजनीयं । अर्थापत्तिरलंकारः शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

सन्तुष्टदेवादीनामवश्यम्भाविफलकं वचनं वरः शुभाशसंनरूपत्वादनियतफलन्त्वाशीः । ऋक्छन्दसा ऋक्छन्दोग्रथितेन वाक्येन । मुनिप्रयुक्तस्यास्याशीर्वचनस्य वेदोक्ताशीर्वादतुल्यत्वसूचनाय ऋक्छन्दः प्रयोगः कृतः कविनेत्यनुसन्धेयम् ।

ययातेरिति ॥ ययातिनाम्नो नहुषसुतस्य शर्मिष्ठेव वृषपर्वनाम्नोऽसुरराजस्य पुत्रीव भर्तुर्दुष्यन्तस्य बहुमता गौरवपात्रं भव । यथा ययातिः पूर्वपरिणीतां देवयानीमनिच्छन् शर्मिष्ठायां स्वनुरक्तोऽभूत् तथा दुष्यन्तोप्यन्तःपुरस्त्रीषु विमुखस्त्वयि बद्धप्रीतिरस्त्वित्याशीः । भर्तुर्बहुमतेत्यत्र "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः । तद्योगाद्भर्तुरिति षष्ठ्यपि । सा शर्मिष्ठा सम्राजं कृतराजसूययज्ञः सर्वभूमीश्वरः सम्राट् "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः । "सत्सूद्विष" इति क्विप् । "मो राजि समः क्वौ" इति समो मकारस्य मत्वम् । तं पूरुमिव पूरुनामानं पुत्रमिव त्वमपि सम्राज चक्रवर्तिनं पुत्रं अवाप्नुहि लभस्व । उभयत्राशिषि लोट् । उपमा ॥ ७ ॥

**गौतमी**—[१]भअवं, वरा क्खु एदे। ण आसिसा।

**काश्यपः**—वत्से, इतः सद्योहुताग्नीन्प्रदक्षिणीकुरुष्व।

(सर्वेपरिक्रामन्ति।)

**काश्यपः**—(ऋक्छन्दसाशास्ते।)

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पालयन्तु ॥ ८ ॥

प्रतिष्ठस्वेदानीम्। (सदृष्टिक्षेपम्।) क्व ते शार्ङ्गरवमिश्राः।

(प्रविश्य)

**शिष्यः**—भगवन्, इमे स्मः।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय।

**शार्ङ्गरवः**—इत इतो भवती।

सर्वे परिक्रामन्ति।

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः,

---

१. भगवन्, वरौ खल्वेतौ। नाशिषौ।

---

**अमी इति** ॥ वेदिं परितः वेद्याः समन्ततः "अभितः परित" इत्यादिना द्वितीया। क्लृप्तानि रचितानि धिष्ण्यानि अधिष्ठानानि येषां तथोक्ताः समिधः एषां सन्तीति समिद्वन्तः ससमिधः समिद्भिः पोषिता इतियावत्। पदसंज्ञायां जश्त्वम्। प्रान्तेषु पार्श्वेषु चतसृषु दिक्ष्वित्यर्थः। संस्तीर्णाः विकीर्णाः दर्भाः कुशा येषां ते तथोक्ताः। विशेषणद्वयेन शकुन्तलाप्रेषणार्थं प्रातरेवाग्निहोत्रादिकं सर्वं निर्वर्तितमिति द्योत्यते। हव्यस्य आज्यादेः गन्धैः दुरितं पापं अपघ्नन्तः नाशयन्तः वैतानाः वितानं यज्ञः तस्येमे "तस्येदमित्यण्"। "क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके" इत्यमरः। यज्ञसंबन्धिनः वह्नयः अग्नयः। बहुवचनेन त्रित्वमुक्तम्। सभ्यावसथ्यसाहित्यात्पञ्चत्वंवा त्वां पालयन्तु रक्षन्तु ॥ ८ ॥

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।

पातुमिति॥ या शकुन्तला युष्मासु वृक्षेषु अपीतेषु पानमकृतवत्सु। अकृतजलसेकेष्वित्यर्थः। न विद्यते पीतं पानं येषां ते तथोक्तास्तेषु। पीतामिति नपुंसके भावे क्तः। यद्वा प्रसिद्धकर्मकत्वेनाकर्मकत्वात्कर्तरि क्तः। यथा मेघो वर्षतीत्यादौ जलं कर्म प्रसिद्धं तथात्रापि। तदुक्तम्। "प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इति। अथवा पीतमेषामस्तीति पीताः "अर्शआदित्वादच्" यथाह भगवान्भाष्यकारः। "आकारो मत्वर्थीयो विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः" इति। अथवोत्तरपदलोपो द्रष्टव्यः "विभक्तधनाः विभक्ताः भ्रातरः, पीतोदकाः पीतागावः इतिवत् पीता इत्यस्य पीतजला इत्यर्थः कल्पनीयः। "गम्यमानस्याप्रयोग एव लोपोभिमतः" इति कैयटः। प्रथममादौ जलमुदकम्। शकुन्तलापक्षेऽयं शब्दः फलमूलादीनामुपलक्षक इति ज्ञेयम् प्रथममित्यनेन यदायदा शकुन्तलाया जलपानसंभवस्त दातदा न। एकस्मिन्दिने शकुन्तलाया बहुवारं जलपानसंभवात् किन्तु प्रथमावसरमेव। अनेन प्रातरारभ्य वृक्षाणां जलसेचनानन्तरमेव स्वस्य फलमूलाद्याहारस्वीकार इति द्योत्यते। पातुं न व्यवस्यति। अत्र जलं पातुं न व्यवस्ततीत्यनेन जलमपि न पातुमीहते। किमुत फलमूलादीन् गृहीतुमिति व्यज्यते। किञ्च न व्यवस्यतीत्यनेन तद्विषयकव्यवसायस्यैवाभावात्तद्ग्रहणस्य सुतरामभावः सूचितो भवति। व्यवस्यतीति वर्तमाने लट्। तेन अद्यापि युष्मास्वपीतेषु न व्यवस्यति सार्वभौमदुष्यन्तपरिणयेन स्वस्य महासौभाग्यबलेऽपि तादृशव्यवसायाभावबोधनेनाश्रमतरुषु शकुन्तलायाः प्रेमातिशयः स्वजने दाक्षिण्यं चेत्यादि सुगुणसंपत्तिः सूचिता। एवं पतिगृहगमनदिनेऽपि शकुन्तलायास्तरूणां जलसेचनकीटनिवारणकरीषदानादिबहुविधरक्षणव्यवसायनिश्चये भूतकालिकनिश्चयस्तु कैमुत्यन्यायसिद्ध एव। अत्र व्यवस्यतीति सार्वकालिकत्वे लडिति केचित्। तच्च तादृशस्यानुशासनस्यानुपलम्भादुपेक्षणीयम्। किंच तथासति अद्यैव प्रयाणसम्भवेन भविष्यत्कालवृत्तान्तस्य सम्भवाभावेन सार्वकालिकत्वभङ्गश्चापतेत्। प्रियं इष्टं मण्डनं अलङ्करणं यस्यास्तथाभूताऽपि। अनेन तद्ग्रहणयोग्यता सूच्यते। स्नेहेन युष्मद्विषयकप्रेमातिशयेन। नतु स्वदेहालङ्करणविमुखतया। भवतां पल्लवम् एकवचनेन कदाप्येकमपि पल्लवमवतंसार्थं न गृह्णातीति सूच्यते। नादत्ते न गृह्णाति। "आङोदोऽनास्यविहरणे" इत्यात्मनेपदम्। आदानं हि क्लेशाभावपूर्वकं ग्रहणम्। तदपि न करोतीति दयाधिक्यं प्रतिपाद्यते। अन्यथा

आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ९ ॥

(कोकिलरुतं सूचयित्वा ।)

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ १० ॥

(आकाशे ।)

---

नापचिनोतीत्यादि प्रयुञ्जीत । आद्ये प्राथमिके दिगादित्वाद्यत् । वः युष्मत्सम्बन्धिनां कुसुमानां पुष्पाणां प्रसूतिसमये उत्पत्तिकाले यस्याः शकुन्तलायाः उत्सवः हर्ष-जनको व्यापारः "उत्सूते हर्षमित्येष उत्सवः परिकीर्त्यते" इति तल्लक्षणात् । भवति उत्पद्यते । स्वसंवर्धितवृक्षाणां स्वदृष्टिपथ एव पुष्पोद्गमदर्शनान्महान्तमान-न्दमन्वभूदित्यर्थः । सेयं प्रत्यक्षपरिदृश्यमाना युष्माकं जलसेचनादिशुश्रूषापरा शकु-न्तला पत्युर्दुष्यन्तस्य गृहं सदनं याति गच्छति । अनेनानुज्ञानस्योचितसमयत्वं ध्वनितम् । सर्वैस्तरुभिर्युष्माभिः । प्रत्येकानुज्ञादाने कालविलम्बो भवेदिति सर्वैरि-त्युक्तम् । अनुज्ञायतां अनुमन्यताम् । प्रार्थनायां लोट् । शकुन्तलाकर्तृकपतिगृहकर्म-कगमनमनुज्ञायतामिति वाक्यार्थस्य कर्मत्वम् । अनेन प्रमदाजनस्वाभाविकया लज्जया शकुन्तला स्वयं न वदति । अतस्तन्मयोच्यत इति भावः । शार्दुलविक्रीडितं वृत्तम् ॥ ९ ॥

**अनुमतेति** ॥ इयं शकुन्तला वनवासे बन्धुभिः बन्धुभूतैः वनवासे बन्धुभि-रिति सप्तमीसमासेन वनवासेपि तेषां बन्धुत्वप्रतिपादनेन तदनुज्ञानावश्यकत्वं सूचितं । तरुभिः वृक्षैः अनुमतं अनुज्ञातं गमनं पतिगृहं प्रति गमनं यस्यास्तथोक्ता जातेति शेषः । यथा यतः अत्र यथा शब्दो हेत्वर्थः । यथाच्च वीरचरिते "यदि-दमधित्यकातः सुवेलाद्रेरकाण्ड एव प्रबलकिलिकिलाकोलाहलमुखरितहरिन्मुखं वली-मुखचक्रमक्रममेवोच्चलितं तथा मन्ये पतितमेव प्रहरणैरिति ॥" अन्यत्रापि "यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां वह्नौ दधाति च यथा कीटमणयः यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ।" इति । एभिस्तरुभिः कलं अव्यक्तमधुरं "ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः । ईदृशं श्रूयमाणप्रकारं परैर्भृताः परभृताः कोकिलाः "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इति कोकिलपर्यायेष्वमरः । तेषां विरुतं शब्दः

रम्यान्तरः कमलिनीभरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ११ ॥

---

"तिरश्चां वाशितं रुतम्" इत्यमरः प्रतिवचनीकृतं मत्कृतशकुन्तलापतिगृहगमनानुज्ञाप्रार्थनायाः उत्तरीकृतम् मया या प्रार्थना कृता तरवः कोकिलरवेण तदुत्तरं चक्रुरित्यर्थः । तथा तस्मादनुमतगमनेति पूर्ववाक्येण संबन्धः । यत्तदोर्नित्यसंबन्धात्तथाशब्दोऽध्याहार्यः अनेन वसन्तसमयः सूच्यते । अपरवक्त्रं वृत्तम् ॥ १० ॥

रम्यान्तर इति ॥ अस्याः पन्थाः कमलिनीभिः पद्मिनीभिः । अत्र बिसिन्यादिपदत्यागेन कमलिनीशब्दप्रयोगात् सरसः कमलसाहित्यं सूच्यते । भरितैः पूर्णैः । अत्र कमलिनीति भूम्नि नित्ययोगे वा मतुप् । तदुक्तं "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥" इति । "कमलिनीहरितै" रितिपाठे हरिद्वर्णैरित्यर्थः । सरोभिः कासारैः । बहुवचनेन मार्गे प्रतिपदं सरसः सद्भावः । तेन तृष्णाद्यभावः सूच्यते । रम्यान्तरः रम्यं मनोहरं अन्तरं मध्यदेशो यस्य स तथोक्तः । छायाप्रधानाः द्रुमाः छायाद्रुमाः 'शाकपार्थिवादित्वात्समासः' तैः । तरुमात्रस्य सम्यक्तापहारिता नास्तीति छायाप्रधानत्वविशेषणं बहुवचनं च । छायाद्रुमलक्षणमुक्तम् । "पूर्वाह्णे च पराह्णे च तलं यस्य न मुञ्चति । अत्यन्तशीतला छाया स छायातरुरुच्यते ॥" इति । नियमितः निवारितः अर्कमयूखानां सूर्यरश्मीनां तापः सन्तापः यस्मिन्सः नित्यसापेक्षात्समासः । "चुलकितार्कमयूखतापः" इति पाठेचुलकितः प्रस्तः शमितः इतियावत् । तथा कुशे जले शेरते कुशेशयानि पद्मानि "अधिकरणे शेतेः" इत्यच् । "शयवासवासिष्वकालात्" इत्यलुक् । तेषां रजोभिः परागैः मृदुः रेणुः यस्य स तथोक्तः । अनेन पादानुपघात उक्तः । शान्तः अनुद्धतः । मन्द इतियावत् । अनुकूलवाही पवनः यस्मिन् स तथोक्तः । शिवः मङ्गलकरः । दस्युहिंस्रजन्तुप्रभृतिकृतोपद्रवरहित इतियावत् । भूयात् आशिषि लिङ्" । अत्र प्रयुक्तविशेषणैः पूर्वोक्तकोकिलरुतेन च शकुन्तलाप्रस्थानस्य शुभनिमित्तानि सूचितानि । तथाचोक्तम् "वामे मधुरवाक्पक्षी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन्वायुः प्रयाणे शुभशंसिनः ॥" इति । वसन्ततिलकं वृत्तम् ॥ ११ ॥

**गौतमी**—[१]जादे, ण्णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं। पणम भअवदीणं।

**शकुन्तला**—(सप्रणामं परिक्रम्य। जनान्तिकम्।) [२]हला पिअंवदे, णं अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति।

**प्रियंवदा**—[३]ण केवलं तवोवणविरहकादरा सही एव्व। तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्थं पेक्खु।

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा।
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ॥ १२॥

**शकुन्तला**—(स्मृत्वा।) [४]ताद, लताबहिणिअं वणजोसिणिं दाव आमन्तइस्सं।

---

१. जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः। प्रणम भगवतीः।

२. हला प्रियंवदे, नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते।

३. न केवलं तपोवनविरहकातरा सख्येव। त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्थां पश्य।

उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥

४. तात, लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये।

---

उद्गलितेति॥ मृगाः हरिणाः उद्गलिताः मुखान्निःसृताः दर्भकवलाः दर्भग्रासाः येषां तादृशा भवन्तीति शेषः। शकुन्तलाविश्लेषजनितदुःखवशाच्चिरपरिचिता मृगाः वदनाद्दर्भान्मुञ्चन्तीति भावः। मयूराः बर्हिणः परित्यक्तं वर्जितं नर्तनं नृत्यं यैस्ते तथोक्ताः अत्रापि भवन्तीति शेषः। अयं च नृत्यपरित्यागो दुःखातिशयं द्योतयति। लताः अपसृतानि गलितानि पाण्डुपत्राणि पक्वपर्णानि याभ्यः स्तादृश्यः सत्यः अश्रूणि बाष्पाणि मुञ्चन्ती व। अत्र वसन्तकालिकपक्वपर्णभ्रंशस्य लताकर्तृकाश्रुमोचनत्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः॥ १२॥

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—(लतामुपेत्य ।) [1]वणजोसिणि, चूदसंगता वि मं पच्चालिङ्ग इतोगदाहिं साहावाहाहिं । अज्जप्पहुदि दूरवत्तिणी क्खुदे भविस्सं ।

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संगतवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १३ ॥

इतः पन्थानं प्रतिपद्यस्व ।

---

१. वनज्योत्स्ने, चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्य-प्रभृति दूरवर्तिनी खलु ते भविष्यामि ।

---

चूतसङ्गतापीति । अत्रापिशब्देन भर्तृस्नेहादप्यधिकस्सोदर्यस्नेह इतिध्वन्यते ।

**संकल्पितमिति** । तवार्थे त्वन्निमित्तम् । अत्रार्थ इत्येतदव्ययम् तथाचोक्तम् "अर्थे कृते च शब्दौ तादर्थ्येऽव्ययसंज्ञितौ" इति । मया मुनित्वादनुरूपवरसम्पदनार्थं नानादेशपर्यटनासमर्थेन मया । प्रथममेव मेनकाविश्वामित्रपरित्यागानन्तरं त्वदानयनानन्तरमेव । अथवा तव च दुष्यन्तस्य च समागमात्प्रागेव । सङ्कल्पितं मनसाऽभीप्सितं आत्मसदृशं कुलशीलवयोरूपादिभिः सर्वथा स्वानुरूपं भर्तारं पतिं त्वं सुकृतैः त्वत्कृतैरेव पुण्यैः गता प्राप्ता । अनुरूपवरसमागमः पित्रादिभिः प्रार्थितोऽपि वध्वास्तादृशभाग्यानुभवयोग्यप्राक्तनसुकृतातिशयादेव घटते । अतस्तव चेयं दुष्यन्तप्राप्तिर्मन्नियोगं विनैव प्राप्तत्वात् सुकृतहेतुकैवेति भावः । इयं पुरोदृश्यमाना नवमालिकाऽपि लताविशेषश्च सुकृतैः सुष्ठु कृतैः निकटरोपणालवालपूरणादिप्रयत्नैः करणैः चूतेन सह संगतवती सङ्गमं प्राप्तवती । अत इति शेषः । अहं संप्रतीदानीं अस्यां नवमालिकायां त्वयि च विषये वीता गता चिन्ता यस्य तादृशः विशेषेण गतचिन्त इत्यर्थः । अस्मीति शेषः । अत्र नवमालिकायाः शकुन्तलायाश्चानुरूपवरसमागमवर्णनाद्योग्येन योग्यसमागमरूपः समालङ्कारः । शकुन्तलादुष्यन्तयोः परिणयस्य निजाभिमतस्य स्वप्रयत्नं विनैव सुकृतातिशयेन प्राप्तिवर्णनात्प्रहर्षणालङ्कारश्चेति समप्रहर्षणयोरङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकं वृत्तम् ॥ १३ ॥

शकुन्तला—(सख्यौ प्रति ।) हला, एसा दुवेणं वो हत्थे णिक्खेवो ।

सख्यौ—अअं जणो तुए दाणिं कस्स हत्थे समप्पिदो । (इति चाष्पं विकिरतः ।)

काश्यपः—अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

(सर्वे परिक्रामन्ति ।)

शकुन्तला—तात, एसा उडजपज्जन्तचारिणी गब्भमन्थरा मअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जअ ।

काश्यपः—नेदं विस्मरिष्यामः ।

शकुन्तला—(गतिभङ्गं रूपयित्वा ।) को णु क्खु एसो पुणो पुणोवि णिवसणं मे सज्जइ (इति परावर्तते ।)

काश्यपः—वत्से,

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।

---

१. हला, एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

२. अयं जनः त्वयेदानीं कस्य हस्ते समर्पितः ।

३. तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जय ।

४. को नु खल्वेष पुनः पुनरपि निवसने मे सज्जति ।

---

अनघप्रसवाक्लेशरहितप्रसूतिः सुखप्रसवेत्यर्थः । प्रियनिवेदयितृकम् । अस्याः पुत्रजननरूपप्रियवार्ताबोधकम् ।

यस्येति ॥ त्वया अत्यन्तदयार्द्रया त्वया कुशा एव सूचयस्ताभिर्विद्धे कृतक्षते । सूचिशब्देन वेधयोग्यत्वं ध्वन्यते । मुखे व्रणविरोपणं व्रणस्य क्षतस्य विरोपणं यथावस्थितिसम्पादनेन शामकं इङ्गुदीनां तापसतरूणां तैलं कर्म न्यषिच्यत निषिक्तम् । नीत्यव्ययेन व्रणावसानपर्यन्तं तदेकतानचित्तता द्योत्यते । श्यामाकानां तृणधान्यविशेषाणां मुष्टिभिः परिवर्धितकः अनुकम्पया पोषितः । अनुकम्पायां

श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४ ॥

शकुन्तला:—[1]वच्छ, किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा वड्ढिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव । (इति रुदती प्रस्थिता ।)

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विरतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५ ॥

---

१. वत्स, किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

---

कन्प्रत्ययः । स्वयमत्तुमसमर्थस्य श्यामाकान्मुष्टौ गृहीत्वा मुखेऽर्पितवतीति पोषणप्रकारं सूचयितुं मुष्टिपदोपादानम् । तादृशः सोऽयं अग्रे दृश्यमानः पुत्रकृतकः कृतकश्चासौ पुत्रश्च "आहिताग्न्यादित्वात्परनिपातः" तथाभूतः मृगः ते पदवीं न जहाति न मुञ्चति । त्वदनुगामी भवतीत्यर्थः । अत्र कुशसूचीति परिणामालङ्कारः । वेधसम्पत्त्यर्थं कुशेषु सूचित्वसमारोपात् । वसन्ततिलकं वृत्तम् ॥ १४ ॥

उत्पक्ष्मणोरिति ॥ उन्नते पक्ष्मणी ययोस्तयोर्नयनयोः उपरुद्धा अन्तरिता वृत्तिः प्रसरो येन तन्न । नित्यसापेक्षत्वात्समासः । दर्शनव्यापारं प्रतिबध्नन्तमितियावत् । बाष्पं स्थिरतया स्थैर्येण धैर्यमवलम्ब्येतियावत् । विरतः निवृत्तः अनुबन्धः अविश्रान्तवहनं यस्य तत्तथोक्तं कुरु । ऊर्ध्वीकृतैः पक्ष्मभिर्बाष्पमोचनं निरुन्धीत्यर्थः । खलु यतः अलक्षितः नयनयोर्बाष्पकलुषतयाऽदृष्टः नतोन्नतः निम्नोन्नतः भूमिभागः भूप्रदेशः यस्मिन् तादृशे मार्गे पदानि पादन्यासाः विषमीभवन्ति स्खलन्ति । अत्र भर्तृगृहप्रस्थानकाले स्खलनादिपदप्रयोगोऽशुभावह इति विषमीभवन्तीत्युक्तम् । तस्मात्कुर्विति पूर्वेण सम्बन्धः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

शार्ङ्गरवः—भगवन्, ओदकान्तात् स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र संदिश्य नः प्रतिगन्तुमर्हसि।

काश्यपः—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः।

(सर्वे परिक्रम्य स्थिताः।)

काश्यपः—(आत्मगतम्।) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम्। (इति चिन्तयति।)

शकुन्तला—(जनान्तिकम्।) हला, पेक्ख। णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि।

अनसूया—सहि, मा एव्वं मन्तेहि।

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं।
गरुअं वि विरहदुक्खं आसाबन्धो सहावेदि॥ १६॥

---

१. हला, पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्याटति दुष्करमहं करोमि।

२. सखि, मैवं मन्त्रय।

३. एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति॥

---

ओदकान्तात् आजलान्तात् उदकसमीपपर्यन्तमितियावत्। "ओदकान्तं प्रियं पान्थमनुव्रजे" दितिस्मरणात्। क्षीरवृक्षच्छायाम् क्षीरप्रधानः वृक्षः क्षीरवृक्षः शाकपार्थिवादित्वात्समासः तस्याश्छायाम् क्षीरिणां वटादीनामेव छायाधिक्यात् क्षीर-वृक्षग्रहणम्। अतिशयेन युक्तम् युक्तरूपम् "प्रशंसायां रूपप्" इति रूपप्प्रत्ययः। दुष्करमहंकरोमीत्यनेन शापतिरोहितस्मृतिं दुष्यन्तमलप्स्यमानायाःशकुन्तलायाभावि दुःखं तुल्यसंविधानतयासूचितम् तस्मादिदन्तुल्यसंविधानेन कृतं पताकास्थानकं तदुक्तम् "पताकास्थानकं प्राहुर्भाविनोर्थस्यसूचनम्। चतुर्भिः कारणैरेतच्चतुर्धापरिकीर्तितम्। सहसैवार्थसम्पत्त्याविमर्शादनुनिर्णयात्। तुल्येनसंविधानेनतथातुल्यविशेषणात्" इति।

एसेति॥ एषाऽपि चक्रवाक्यपि। अपिशब्देन क्षणमपि प्रियविरहासहिष्णुत्वं ध्वन्यते अथवा अपि शब्देन शकुन्तला समुच्चीयते। प्रीणातीतिप्रियः "प्रीञ्

काश्यपः—शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

शार्ङ्गरव—आज्ञापयतु भवान्।

काश्यवः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

---

तर्पण" इत्यस्मात् "इगुपध" इति कप्रत्यये रूपम्। तेन चक्रवाकेण विना "पृथग्विना" इत्यादिना तृतीया। विषादेन दुःखेन दीर्घतरां द्राघीयसीं रजनीं जातावेकवचनं सर्वारजनीरित्यर्थः रज्यन्त्यनुरक्ता भवन्ति रागिणोऽस्यामिति रजनी। "क्षिपेः किच्च" इति चकारादनिः। कित्वान्नलोपः ततो ङीष्। इदं च पदं विरहस्य दुःहत्वं द्योतयति। अत एव न रात्र्यादिपदप्रयोगः। तां गमयति यापयति प्रियसाहित्ये रात्रिः क्षणमिव गच्छेदिति द्योतयितुं दीर्घतरामित्युक्तम्। गुर्वपि असह्यमपि विरहदुःखं प्रियजनवियोगदुःखं कर्म आशाबन्धः प्रियजनप्राप्त्याशा साहयति। णिजन्तस्य सहधातोः पयोगः। उक्तश्चायमेवार्थो मेघसन्देशेऽपि। "आशाबन्धः कुसुमसदृशः प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि॥" आर्या॥ १६॥

अस्मानिति॥ अस्मान्। पूजायां बहुवचनम्। संयमस्तप एव धनं येषां तादृशान् साधु सम्यग्विचिन्त्य अत्र मुन्यादिपदत्यागेन संयमधनग्रहणं तृणीकृतधनान्तरत्वं सूचयन् शकुन्तलायाः स्वीकारास्वीकारयोर्हर्षक्रोधौ सूचयति। अतः शकुन्तला न विमाननीयेति भावः। आत्मन उच्चैः उत्कृष्टं पत्नीत्यागविमुखमिति यावत्। कुलं चन्द्रवंशं च साधु विचिन्त्येत्यनुषज्यते। तादृशवंशोत्पन्ने त्वय्यलीकवादप्रतारणादिकं नोचितमिति व्यज्यते। अस्या अरण्यवासितया कैतवानभिज्ञायाः शकुन्तलायाः त्वयि तां त्वयैव बहुशोऽनुभूतां स्नेहप्रवृत्तिं अनुरागप्रबन्धम्। अनेन भवद्विरहदिवसमारभ्य प्रतिक्षणोपचीयमानबहुविधदुःखानुभवो द्योत्यते। अत एव तवास्यामिति नोक्तम्। कथमपि अबान्धवकृतां न सन्ति बान्धवा अस्मदादयो यस्मिन्कर्मणि तद्यथा तथा कृतां अनया त्वयि प्रवर्तितां विचिन्त्य। बन्धुजनसम्मतिमप्यविगणय्य मयि कृतस्नेहेयं न कदाऽपि विमाननामर्हतीति साधु विचिन्त्येत्यर्थः। इयं तादृशी दारेषु राजपरिग्रहेषु मध्ये सामान्या दारान्तरसाधारणी प्रतिपत्तिः पुरस्कृतिः। गौरवमित्यर्थः। सा पूर्वा यस्मिन्कर्मणि तद्यथा। दारान्तरेषु यादृशं गौरवं तादृशं गौरवं पुरस्कृत्येत्यर्थः। त्वया कुलशीलाद्युत्कृष्टगुणवता त्वया दृश्या अवेक्षणी-

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १७ ॥

शार्ङ्गरव—गृहीतः संदेशः ।

काश्यपः—सा त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लोकज्ञा वयम् ।

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य ।

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।

---

या । पूर्वपरिणीतैर्दारैस्सह समानगौरवभाजनं करणीयेति भावः । तर्हि लोके सर्वै-र्विशेषप्रतिपत्तिरेव प्रार्थ्यते कथमत्र सामान्यप्रतिपत्तिः प्रार्थ्येत इति चेत्तत्राह । अतः परमिति । अतः परं दारान्तरसाधारण्येनावेक्षणादन्यत् विशेषप्रतिपत्त्यादि-कमित्यर्थः । भाग्यायत्तम् भाग्ये दैवे आयत्तमधीनम् । "दैवं दिष्टं भागधेयं भाग्यं स्त्रीनियतिर्विधिः" इत्यमरः भवतीति शेषः । तत् वधूबन्धुभिः वध्वाःस्त्रिया बन्धु-भिः बान्धवैः अस्माभिः न वाच्यं न वक्तुमुचितम् । यतो वयं वधूबन्धवस्ततोऽ-स्मदुच्यमानं तु पक्षपातितयौदासीन्यमेव गमयेत् । अथवा माननीये जामातरि नियोगत्वेन पर्यवस्येत् । अतो नोच्यत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१७॥

शुश्रूषस्वेति ॥ गुरून् माननीयान् श्वशुरादीन् शुश्रूषस्व सेवस्व तदुचितां परिचर्यां विधेहीत्यर्थः । सन्नन्तः श्रृणोतिः परिचर्यायां रूढः । "वरिवस्या तु शुश्रू-षा परिचर्याप्युपासनम्" इत्यमरः । "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदम् । सपत्नीजने समानः पतिर्यासां ताः सपत्न्यः समानभर्तृकाः । "नित्यं सपत्न्यादि-षु" इति सूत्रेण पतिशब्दान्त्यस्य नकारः ङीप् । समानस्य सादेशश्च निपात्यते । तासां भर्तुर्दाराणामित्यर्थः । जने समूहे प्रियसख्याः वृत्तिं प्रियभाषणादिव्यापारं कुरु तेषु त्वया प्रियसखीवदाचरितव्यमित्यर्थः । विप्रकृतापि भर्त्रा विमानितापि रोषणतया कोपनतया भर्तुः पत्युः प्रतीपं प्रतिकूलं मास्मगमः मायासीः । "स्मो-त्तरेलङ् च" इति चाल्लुङ् । प्रतिकूलचारिणीमाभूरित्यर्थः । भाग्येषु सुखेष्वनुत्सेकि-नी सती परिजने भृत्यवर्गे भूयिष्ठं प्रकामं दक्षिणा अनुकूला भव । ममैतादृशं भाग्यमस्तीति मास्मदृप्यइत्यर्थः । यद्वा परिजने सेवकवर्गे भूयिष्ठमतिशयेन दक्षिणा

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १८ ॥
कथं वा गौतमी मन्यते ।

गौतमी—[1]एत्तिओ वहूजणस्स उवदेसो । जादे, एदं क्खु सव्वं ओधारेहि ।

काश्यपः—वत्से, परिष्वजस्व मां सखीजनं च ।

शकुन्तला—[2]ताद, इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ।

काश्यपः—वत्से, इमे अवि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकुन्तला—(पितरमाश्लिष्य ।) [3]कहं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअतडुम्मूलिआ चन्दणलता विअ देसन्तरे जीविअं धारइस्सं

काश्यपः—वत्से, किमेवं कातरासि ।

---

१. एतावान्वधूजनस्योपदेशः जाते, एतत्खलु सर्वमवधारय ।

२. तात इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

३. कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्दरे जीवितं धारयिष्ये ।

---

अनुकूला भव । भाग्येषु सम्पत्सु अनुत्सेकिनी निगर्वा भव । ममैतादृशं सौभाग्यमिति गर्वो न कार्य इति भावः । अत्र पक्षे भवेत्यध्याहार्यम् । भूयिष्ठमित्यादेर्वाक्यद्वयकल्पनस्योचितत्वेऽप्येकवाक्यत्व एव स्वरसो दृश्यते । शुश्रूषस्वेत्यादिषु सर्वत्र विधौ लोट् । एवं इत्थं युवतयः तरुण्यः गृहिण्याः पत्न्याः पदं स्थानं अधिकारमितियावत् । यान्ति प्राप्नुवन्ति । वामाः विपरीतचारिण्यः कुलस्य उभयवंशस्य । तनयादौर्जन्यजनितापवादस्य पित्रादिगामितायाअप्यनुभवसिद्धत्वात् । आधयः यातनास्वरूपाः अर्थात्तत्कारिण्यो भवन्तीति शेषः । यथा आधयो मनसो दुःसहव्यथामुत्पादयन्ति तथा प्रतिकूलचारिण्यः स्त्रियोऽप्युभयकुलस्यातीव कलङ्कमुत्पादयन्तीति भावः ॥ १८ ॥

मलयादन्यत्र चन्दनलतानजीवतीति प्रसिद्धिः । अनेन भर्तृबहुमानितायाअपि पितृवियोगाविस्मरणं ध्वन्यते ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १९ ॥ Sorrow.

---

अभिजनवत इति ॥ हे वत्से, त्वं अभिजनवतः महाकूलप्रसूतस्य "कुलेप्यभिजनान्वयौ" इत्यमरः । अत्र मतुप् प्रत्ययः कुलस्य वैशिष्ट्यं द्योतयति । तदुक्तं "भूमनिन्दाप्रशंसासु, नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुवादयः ॥" इति । अन्ये तु गुणीत्यादाविव केवलं सामान्यपदं विशेषं बोधयतीत्याहुः । एतश्च दयादाक्षिण्यधर्मभीरुत्वादिगुणबाहुल्यं सूचयति । अथवा अभितः समन्ततः जनवतः बन्धुजनयूक्तस्य । अनेन भर्तुर्बन्धुजनयुक्तत्वकथनेन तत्कृत्यचिन्तया गृहिणीगतो व्यापारातिशयो ध्वन्यते । भर्तुर्दुष्यन्तस्य श्लाघ्ये मंत्र्यादिपदापेक्षया स्पृहणीये गृहिणीपदे गृहिण्यधिकारे स्थिता वर्तमाना सती । अनेन स्त्रीणामुत्कर्षस्य भर्त्रधीनत्वाद्दुष्यन्तपरिणीतायास्तव कुलापेक्षयाऽधिकारापेक्षया वा न कश्चिदपकर्षः सम्पत्स्यत इति द्योत्यते । तस्य तव भर्तुर्दुष्यन्तस्य विभवेन ऐश्वर्येण गुरुभिः महद्भिः दुर्वहैरितियावत् । स्त्रीणां गृहकृत्यस्य विभवानुरुपत्वादिति भावः । कृत्यैः गृहकर्मभिः प्रतिक्षणं क्षणेक्षणे आकुला व्यासक्तचित्ता । अनेन स्वगृहकार्यसहस्रनिमग्ना त्वं विगलितवेद्यान्तरा भविष्यसीति द्योत्यते । अचिरादविलम्बितं प्राची पूर्वादिक् अर्कं सूर्यमिव पावनं पवित्रं तनयं सुतं प्रसूय उत्पाद्य । अनेनार्कोपमानेनोत्पत्स्यमानस्य पुत्रस्य जगद्विलक्षणतेजस्वित्वलोकत्रयव्याप्तकीर्तिमत्त्वपावनत्वादि बहुगुणयोगिता सूच्यते । मम विरहजां मद्वियोगजनिताम् । नित्यसापेक्षत्वात्समासः । शुचं न गणयिष्यसि न स्मरिष्यसि । लोके स्त्रीणां पितृगृहावियोगदुःखानुभवहेतुषु नैकोऽपि तव दृश्यते । किन्तु । अतिश्लाघ्यगृहिणीपदप्राप्तिः, अनवरतगृहकार्यव्यग्रता, अत्युत्कृष्टपुत्रलाभश्चेत्येवं शोकविस्मरणहेतवो बहुधा दृश्यन्ते । अतः शोकं विस्मरिष्यस्येवेति भावः । अत्र केचिदेवं व्याचक्षते । "न गणयिष्यसि न मंस्यसे । न तु सा न भविष्यति । पितृवियोगदुःखस्याविस्मरणीयत्वात् ॥" इति । तच्चार्थकल्पनं लोकोत्तरभर्तृसमागमेन सकलपुरंध्रीजनस्पृहणीयसुखानुभववत्याः शकुन्तलायाः कादाचित्कदुःखानुभववत्वकल्पनमप्यचतुरमित्यत उपेक्षणीयमेव । अत्र चतुर्थचरणंप्रतिपूर्वचरणत्रयस्य हेतुत्वेनोपादनात्काव्यलिङ्गमलङ्कारः । स च प्राचीवार्कमित्युपमालङ्कारेण सङ्कीर्यते । हरिणीवृत्तम् ॥ १९ ॥

(शकुन्तला पितुः पादयोः पतति ।)

काश्यपः—यदिच्छसि ते तदस्तु ।

शकुन्यला—(सख्यावुपेत्य ।) हला, दुवे वि मं समं एव्व परिस्सजह ।[1]

सख्यौ—(तथा कृत्वा ।) सहि, जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि ।[2]

शकुन्तला—इमिणा संदेहेण वो आकम्पिद ह्मि ।[3]

सख्यौ—मा भाआहि । अदि सिणेहो पावसङ्की ।[4]

शार्ङ्गरवः—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

शकुन्तला—(आश्रमाभिमुखी स्थित्वा ।) ताद, कदा णु भूओ तवोवणं पेक्खिस्सं ।[5]

काश्यपः—श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।

---

१. हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

२. सखि, यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गलीयकं दर्शय ।

३. अनेन संदेहेन वामाकम्पितास्मि ।

४. मा भैषीः । अति स्नेहः पापशङ्की ।

५. तात, कदा नु भूयस्तपोवनं प्रेक्षिष्ये ।

---

प्रत्यभिज्ञानमन्थरः पूर्वमनुभूतस्यापि पश्चाद्विस्मृतस्यार्थस्यपुनः कालान्तरे स्मरणं प्रत्यभिज्ञानं तस्मिन् तत्तेदंतावगाहिनि सेयं शकुन्तलेत्येवंरूपे ज्ञाने मन्थरः शिथिलः तादृशज्ञानरहित इत्यर्थः । युगान्तरं हस्तचतुष्कावधि "युगं हस्तचतुष्केपि" इयि विश्वः ।

भूत्वेति ॥ चत्वारः चतुर्दिक्ष्ववस्थिताः सागराः । विशेषणेनैव विशेष्यप्रतिपत्तिः । ते अन्ता अवधयो यस्यास्तथोक्तायाः मह्याः सपत्नी भूत्वा । सपत्नीशब्दो व्याख्यातः । चतुरुदधिमेखलिताया मह्या सहैकभर्तृका भूत्वा । चतुःसागर-

भर्त्रा तदर्पितकुटुम्वभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ २० ॥

**गौतमी**—जादे, परिहीअदि गमणवेला । णिवत्तेहि पिदरं । अहवा चिरेण वि पुणो तुणो एसा एव्वं मन्तइस्सदि । णिवत्तदु भवं ।

**काश्यपः**—वत्से उपरुध्यते तपोऽनुष्ठानम् ।

**शकुन्तला**—(भूयः पितरमाश्लिष्य ।) भूओवि तपच्चरणपीडिदं तादस्ससरीरं अदिमेत्तं मम किदे उक्कण्ठितम् हविस्सदि ।

---

१. जाते, परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते निवर्ततां भवान् ।

२. भूयोऽपि तपश्चरणपीडितं तातस्य शरीरमतिमात्रं मम कृत उत्कण्ठितम् भविष्यति ।

---

वेष्टितभूभर्तुर्दुष्यन्तस्य महिषी भूत्वेतियावत् । दुष्यन्तस्यापत्यं पुमान् दौष्यन्तिः "अत इञ्" इतीञ् । तं अप्रतिरथं न विद्यते प्रति संमुखः रथो यस्य तम् । "मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु स्मृत इति" विश्वः । अत्र रथशब्देन रथिको लक्ष्यते । तथा च प्रतिपक्षभूतप्रतिरथिकशून्यमित्यर्थः । तनयं पुत्रं निवेश्य विवाह्य । अत्र निवेशपदस्य विवाहे प्रयोगः "एव मात्तरतिरात्मसम्भवांस्तान्निवेश्य चतुरोऽपि तत्र सः" इति रघुवंशैकादशसर्गश्लोकव्याख्यातोऽवगन्तव्यः । तस्मिन् तनये अर्पितः न्यस्तः कुटुम्बस्य पोष्यवर्गस्य भरः भारः येन तादृशेन भर्त्रा सार्धं "सहयुक्तेऽप्रधान" इति भर्तुरप्रधानविवक्षया तृतीया । पत्युरतिवल्लभा त्वं यत्करिष्यसि तदेव भर्ताङ्गीकरिष्यतीति द्योतयितुमप्रधानत्वोक्तिः । सहशब्दयोगाभवेऽपि तदर्थेन योगमात्र एव तृतीयाप्रवृत्तेस्तत्सूत्रे युक्तग्रहणेन "वृद्धो यूना" इत्यादिना ज्ञापकेन चलाभात । प्रकृते तु तद्वाचकः सार्थशब्दो वर्तत एव । शान्ते प्रकरणानुसाराद्वयसीत्यध्याहार्यम् । अथवा शान्ते शमप्रधाने अस्मिन् आश्रमे तपोवने पदं स्थानं वसतिमिति यावत् । करिष्यसि । अत्रैव निवत्स्यसीति भावः । यदा युवां स्थविरभावं गमिष्यतस्तदायुवाभ्यां किञ्चित्तपोवनमधिवस्तव्यं तदर्थं मदीयएवाश्रमस्त्वया परिगृहीतव्य इत्यर्थः । अत्रनिवेश्येत्यस्य सिंहासने स्थापयित्वेतिकेषां चिद्व्याख्यानं निवेश्येत्यस्य विरलप्रयोगत्वादर्थानभिज्ञपरिकल्पितम् । तथासति तदर्पितकुटुम्बभरेणेत्यनेन पौनरुक्त्यं स्यात् । राज्ञोजगत्कुटुम्बित्वान्मह्या अपि तेन गता-

**काश्यपः**—(सनिःश्वासम् ।)

शममेष्यति मे शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारि विरूढं नीवारबलिं विलोकयतः ॥ २१ ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

(निष्क्रान्ता शकुन्तला सहयायिनश्च ।)

**सख्यौ**—(शकुन्तलां विलोक्य ।) हद्धी, हद्धी । अन्तरिहिदा पिअसही सउन्दला वणराईए ।

**काश्यपः**—(सनिःश्वासम् ।) अनसूये, गतवती वां सहचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**—तादृ, सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो ।

**काश्यपः**—स्नेहवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

---

१. हा धिक्, हा धिक् । अन्तर्हिता प्रियसखी शकुन्तला वनराज्या ।
२. तात शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

---

र्थत्वात् । अत्र "दौष्यन्तिष्मप्रतिरथं तनयं प्रसूय" इतिपाठोऽपि "तनयमचिरात्प्राचीवार्कम्" इत्यनेन पुनरुक्तत्वान्नैवादरणीयः । वसन्ततिलकं वृत्तम् ॥ २० ॥

शममिति ॥ उटजस्य पर्णशालायाः द्वारि द्वारदेशे । द्वारस्थस्येव नीवारबलेः प्रवेशनिर्गमसमये पौनःपुन्येन दर्शनसम्भवात् द्वारीत्युक्तम् । त्वया रचितपूर्वं पूर्वंरचितं "सुप्सुपा" इति समासः । विरूढं अङ्कुरितं नीवारबलिं तृणधान्यरूपमुपहारं "करोपहारयोः पुंसि बलिः" इत्यमरः । विलोकयतः पश्यतः वर्तमानार्थेशतृप्रत्येन यदायदाहमुटजद्वारं पश्यामि तदा तदा सः त्वत्स्मृतिमुद्बोधयन् मम शोकं वर्धयिष्यतीति शोकस्य दुःसहत्वं द्योत्यते । मे बाल्यादारभ्य पोषयितुः क्षणमपि त्वद्विश्लेषमसहमानस्येत्यर्थान्तरसंक्रमितवाच्यम् । शोकः त्वद्वियोगजनितं दुःखं कथं केनोपायेन शमं शान्तिं एष्यति गमिष्यति । न कदापि शोकः शान्तिमेष्यतीति भावः ॥ २१ ॥

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥ २२ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीमहाकविकालिदासकृतावभिज्ञानशाकुन्तले तृतीयोऽङ्कः ।

---

अर्थ इति ॥ कन्या अप्रत्तादुहिता विशेषनिर्णयाभावेनान्यदीयः अर्थ एव हि धनमेव हि । हिः प्रसिद्धौ । तस्मादिति शेषः । परिग्रहीतुः परिगृहीतृसम्बन्धिनीं तां परकीयात्वेन प्रसिद्धां शकुन्तलां परिग्रहीतुरिति सम्बन्धसामान्ये षष्ठी । अद्य अस्मिन्दिने संप्रेष्य प्रेषयित्वा । अर्थात्पतिगृहं प्रतीति गम्यते । मे मदीयः अयं अन्तरात्मा अन्तःकरणं प्रत्यर्पितः स्थापकाय प्रातिदत्तः न्यासः रक्षणार्थं विस्रम्भात् स्थापितं धनं येन स तथोक्त इव प्रकामं अत्यन्तं विशदः निर्मलः जातः । यथा केनचित्कस्मिंश्चित्सज्जने विस्रम्भान्निक्षिप्ते न्यासे तत्प्रत्यर्पणावधि सज्जनो निकामं दुःखी भूत्वा प्रत्यर्पणानन्तरं महान्तमानन्दमनुभवेदेवं विवेकसलिलसंक्षालितसंसारवासनापङ्के मनसि प्रत्यगात्मभावनया वीतशोकस्यापि मम मानसमेतावत्पर्यन्तं शकुन्तलारक्षणापेक्षया सदुःखमिवासीत् । इदानीमवश्यप्रस्थापनीयां तां पतिगृहं प्रेषयित्वा निर्दुः खं जातमित्यन्तरात्मनः प्राधान्यमुक्तम् । उपमालङ्कारः । इन्द्रवज्रावृत्तम् ॥ २२ ॥

इति श्रीदुग्धापगादक्षिणतीरास्थितविरिञ्चिपुराभिजन-
श्रीरामसुधीवरतनूभवशङ्करविरचिताया-
मभिज्ञानशाकुन्तलव्याख्यायां विद्व-
न्मनोरमाख्यायां चतुर्थोऽङ्कः ।

---

# पञ्चमोऽङ्कः ।

(ततः प्रविशत्यासनस्थो राजा विदूषकश्च ।)

**विदूषकः**—(कर्णं दत्त्वा ।) [1]भो वअस्स, संगीतसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति ।

**राजा**—तूष्णीं भव । यावदाकर्णयामि ।

(आकाशे गीयते ।)

[2]अहिणवमहुलोलुवो तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।

---

१. भो वयस्य, संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

२. अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥

---

कलविशुद्धायाः कला अव्यक्तमधुरा विशुद्धाअसङ्कीर्णस्वरान्तरतयानिर्दोषा चतथाभूतायाः गीतेः स्वरसंयोगः स्वरसमुदायः वर्णपरिचयम् वर्णः गीतक्रमः तस्य परिचयम् गानक्रियाभ्यासमितियावत् ।

अहिणवेति ॥ हे मधुकर मधु करोति । "कृञो हेतुताच्छील्यानुलोम्येषु" इति टः । तस्य सम्बुद्धिः । अभिनवं नूतनं यन्मधु मकरन्दस्तस्मिन् लोलुपः सतृष्णः । अनेन प्रत्यग्रविकस्वरानेकसुमरसास्वादनलम्पटत्वं द्योत्यते । तादृशः त्वं चूतमञ्जरीं आम्रवल्लरीं अनेनेतरपुष्पविलक्षणसौरभातिशयशालित्वं ध्वन्यते । तथा यथा स्वाभिलाषपरिपूर्तिर्भवति तथेत्यर्थः । परिचुम्ब्य परितः समन्ततश्चुम्बित्वा । अनेन यावच्चुम्बनेन तद्रसौत्कृष्ट्यज्ञानं भवति तावदाघ्रायेति व्यज्यते । कमलेषु पद्मेषु वसतिः कमलवसतिः । सैव तन्मात्रं । मयूरव्यंसकादित्वात्समासः । तेन निर्वृतः सुखितः । अत्र कमलमात्रवासेन सुखित इत्युक्त्या भ्रमरस्य पुष्पान्तरेष्वनास्था सूच्यते । केचित्तु "कमले पद्मे वसतिमात्रेण केवलवासेनैव निर्वृतः लब्धसुखः" इति व्याचक्षते । तदसङ्गतम् । तथा सति मात्रपदस्य वसतावेवान्व-

कमलवसइमेत्तणिव्वुदो
महुअर विह्मरिओ सि णं कहं ॥ १ ॥

---

यात् कमले वास एव मधुकरेणाकारि नतु तद्रसास्वाद इत्यर्थः प्रतीयेत । तथा च मधुकरे कमलरसानास्वादरूपदोष एवारोप्येत । एवंच निर्वृत इति न सङ्गच्छेत । रसास्वादमन्तरा केवलवासेन निर्वृतेरसम्भवात् । तावतैव निर्वृतेरभ्युपगमेतु सहृदयासम्मतं मधुकरस्यारसिकत्वं समापतेत् । प्रकृतार्थश्च कमले केवलमुषित्वा तेनैव सुखीभूय पुष्पान्तराणि नाद्रियसे इत्येवं मधुकरोपालम्भरूपो न परिस्फुरेदेव । अतो यथाव्याख्यातमेव समञ्जसम् । अत्र कमलपदेन रात्रौ विकासाभाववत्तया चूतमञ्जरीवत्सर्वदावस्थित्यभावात्कमलस्य विकासविशिष्टसर्वकालं भ्रमरेणानुभूयमानतया चर्वितचर्वणन्यायेनाहृद्यत्वादुपेक्षणीयत्वं ध्वन्यते । तथाभूतः सन् एनां निरतिशयानन्देन यावद्रसानुभवस्तावदनुभतपूर्वां चूतमञ्जरीं कथं केन हेतुना विस्मृतोऽसि व्यस्मार्षीः । अत्र स्मरणस्य ज्ञानेऽन्तर्भावात् "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने कर्तरि क्तः । अद्यापि विस्मरस्येवेति मधुकरोपालम्भस्य प्राकट्यं वर्तमानकालिकप्रत्ययेन बोध्यते । अथवा विस्मृतमिति नपुंसके भावे क्तः । "तदस्यास्ति" इत्यर्थे "अर्शआदित्वात्" अच्प्रत्ययः । उद्दिश्येत्यध्याहारः । एनां चूतमञ्जरीमुद्दिश्य कथं विस्मृतिमानसीत्यर्थः । यद्वा । अविवक्षितकर्मकत्वेनाकर्मकत्वात्कर्तरि क्तः । अत्र पक्षेऽप्युद्दिश्येत्यध्याहार्यम् । अन्यथा एनामिति कर्मणोऽनन्वयः । अध्याहारे तूद्देशक्रियानिरूपितं कर्मत्वमुपपद्यत एव । कथंशब्देन प्रत्यग्रविकस्वरसुमरसास्वादबद्धादरस्य कृताम्रमञ्जरीमकरन्दास्वादस्य तवारसिकस्येव कमलवासमात्रपरितृप्तत्वं न युज्यत इति मधुकरं प्रति निन्दा व्यज्यते । इयं यवनिकाभ्यन्तरस्थिताया राजपत्नीध्वन्यतमाया हंसपदिकाया गीतिः । अत्रेदमनुसन्धेयम् । पूर्वं हंसपदिकासौन्दर्यातिशयविमोहितचित्तो दुष्यन्तस्तां परिणीय कंचित्कालं तदासक्तचित्तो भूत्वाऽनन्तरं वसुमतीनाम्न्यां स्वमहिष्यामाहितप्रणयो हंसपदिकां व्यस्मार्षीत् । अथ च स्वस्मिन्वैमुख्यमुत्प्रेक्षितवत्यास्तस्या राजानं प्रत्युपालम्भोऽस्या गीतेः परमार्थः । अत्र मधुकरशब्देन राज्ञो विविधपद्मिनीजातिस्त्रीसंभोगचातुरी ज्ञाप्यते । अभिनवमधुलोलुप इत्यनेन स्त्रीरत्नतारतम्याभिज्ञत्वं चूतमञ्जरीमित्यनेन स्वस्येतरस्त्रीविलक्षणसौन्दर्यादिकं च सूच्यते । कमलवसतिमात्रनिर्वृत इत्यनेन बहुवारमुपयुक्ततयान्तः पुरस्त्रीणामुपभोगायोग्यत्वं ध्वनितम् । विस्मृतोऽस्येनां कथमित्यनेन स्वविमुखं राजानं प्रत्युपालम्भः संक्षेपेण प्रत्यपादीति ज्ञेयम् । अत्राप्रस्तुतभ्रमरवृत्तान्तेन प्रस्तुतस्य राजवृत्तान्तस्य कथनात्सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसा ।

राजा—अहो रागपरिवाहिनी गीतिः ।

विदूषकः—[1]किं दाव गीदीए भवदा अवगओ अक्खरत्थो ।

राजा—(स्मितं कृत्वा ।) सकृत्कृतप्रणयोऽयं जनः । तदस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माढव्य, मद्वचनादुच्यतां हंसपदिका । निपुणमुपालब्धोऽस्मीति ।

विदूषकः—[2]जं भवं आणवेदि । (उत्थाय ।) भो वअस्स, गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए अच्छराहिं विअ वीदराअस्स णत्थि दाणिं मे मोक्खो ।

राजा—गच्छ । नागरिकवृत्त्या संज्ञापयैनाम् ।

विदूषकः—[3]का गई (इति निष्क्रान्तः ।)

---

१. किं तावद्गीत्या भवताऽवगतोऽक्षरार्थः ।

२. यद्भवानाज्ञापयति । भो वयस्य, गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके अप्सरोभिरिव वीतरागस्य नास्तीदानीं मे मोक्षः ।

३. का गतिः ।

---

अत्र केचिदिमं श्लोकं राज्ञः शकुन्तलाविस्मरणहेतुकोपालम्भविषयं परिकल्प्य तत्परत्वेनापि शब्दान्योजयन्ति । तदसङ्गतम् । यद्यप्ययं श्लोकः पूर्वानुभूतशकुन्तलावृत्तान्तं विस्मृतवतो राज्ञः संस्कारोद्बोधनार्थमेव कविनात्र प्राधान्येन निवेशितः । तथाप्यविज्ञातशकुन्तलावृत्तान्तायाः हंसपदिकाया उक्तौ तादृशार्थकल्पनं न चारुतां भजते । वस्तुतस्तु विदितशकुन्तलावृत्तान्तस्य राज्ञः पुनरेतद्गीताकर्णनेन दुर्वाससश्शापवशाद्विस्मृतस्यापि शकुन्तलावृत्तान्तस्य स्मृत्युत्पादकसंस्कारोद्बोधो भवत्येवेति न काचिदप्यनुपपत्तिः । अपरवक्त्रं वृत्तम् ॥ १ ॥

रागपरिवाहिनी रागसम्पूर्णा अत्यन्तरञ्जिकेत्यर्थः । सकृत्कृतप्रणयः सकृदेकवारम् कृतः प्रणयो येन स तथोक्तः मदुपालम्भं मत्सम्बन्धिनां निन्दाम् । इष्टजनविरहाद्दतेपीत्यनेन शापजनितविकारस्यप्राबल्यमुक्तम् उत्कण्ठितमिति । सत्यपिशापेस्थायिन्यारतेरविच्छेदार्थमुक्तिः अन्यथामध्ये विच्छेदेमहात्रसभङ्गस्स्यात् । ततः प्रविशतीति अत्रकञ्चुकिनस्सर्वदा राजगृहावस्थानाद सूचितस्यापिप्रवेशः कार्यवशाद्युक्त एवेत्यवधार्यम् ॥ कञ्चकी अन्तः पुरचरः तल्लक्षणं यथा । "अन्तः पुरचरो वृद्धो विप्रोगुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥" ईदृशीमवस्थाम् वृद्धावस्थाम् ।

**राजा**—(आत्मगतम् ।) किं नु खलु गीतमेवंविधार्थमाकर्ण्येष्टजन-विरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।

---

यदुक्तम् "इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि" इति तत्समर्थयितुं मनोहरवस्तुदर्शनस्य जन्मान्तरानुभूतविषयस्मृतिजनकसंस्कारोद्बोधकत्वमित्याह । **रम्याणीति** ॥ जन्तुः जनः प्राणिमात्रं लक्षयता जन्तुशब्देन सर्वानुभवसिद्धत्वं द्योत्यते । सुखितोऽपि सञ्जातसुखोऽपि । "तदस्य सञ्जातं तारकादिभ्य इतच्" इतीतच् । अनवाप्तेष्टजनविरहदुःखोऽपीत्यर्थः । अपिशब्देन विरहिणः पर्युत्सुकत्वं कैमुतिकन्यायसिद्धमिति ध्वन्यते । रम्याणि मनोहराणि वस्तूनि । विशेषणेनैव विशेष्यावगतेस्तदग्रहणम् । वीक्ष्य दृष्ट्वा मधुरान् श्रुतिसुखदान् शब्दान् गीतातीन् निशम्य श्रुत्वा यस्मात्पर्युत्सुकः उत्कण्ठितो भवति । उत्कलिकाकुलचित्तवृत्तिः सम्पद्यत इतियावत् । तत्तस्मात् भावस्थिराणि भावैः प्राग्वासनाभिः स्थिराणि रूढमूलानि । जन्मसहस्रैरपि दूरीकर्तुमशक्यानीत्यर्थः । जननान्तरसौहृदानि अन्यज्जननं जननान्तरं । मयूरव्यंसकादित्वात्समासः । तस्य सौहृदानि शोभनं हृदयं येषां ते सुहृदः "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति साधुः । तेषां भावाः सौहृदानि यद्यपि "हायनान्तयुवादिभ्योऽण्" इति युवादित्वादणि "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धौ सौहार्दमिति भाव्यम् तथापि बहूनां सहाकविप्रयोगाणामुपलम्भात्प्रयोगस्यास्य साधुत्वमवगन्तव्यम् । तथोक्तमुत्तररामचरिते सौहृदादपृथगाश्रयामिमाम्" इति । "निसर्गसौहृदेनास्माक" मित्यनर्घराघवे । अबोधपूर्वं बोधः पूर्वो यस्य तद्बोधपूर्वं तन्न भवतीत्यबोधपूर्वम् । विषयविशेषज्ञानाभावपूर्वमित्यर्थः । चेतसा स्मरति नूनं । नूनमिति दार्ढ्यापादकमव्ययम् । नतूत्प्रेक्षाव्यञ्जकं "ततस्तद्विपाकानुगुणानाभिव्यक्तिर्वासनानां" इति जात्यन्तरव्यवधानेऽपि जन्मान्तरस्मरणस्य पातञ्जलयोगशास्त्रसिद्धत्वात् । उक्तं च रघुवंशे "मनो हि जन्मान्तरसङ्गतिज्ञम्" इति एवमेव कादम्बर्यां जननान्तरजातसौहार्दाया महाश्वेतायाः स्थानसम्पर्केन मनसः स्मृतेः पुण्डरीकस्यौत्सुक्यं द्रष्टव्यम् । इष्टजनसङ्गमेऽपि रम्यवस्तुदर्शनादिभिः पर्युत्सुकत्वस्याविर्भावाज्जन्तुरवश्यं जन्मान्तरसौहार्दानबोधपूर्वं मनसा स्मरतीत्यर्थः । अनेन राज्ञः शकुन्तलास्नेहो दुर्वाससश्शापवशात् जन्मान्तरवत्तिरोहित इत्यवगम्यते । अत्रोत्तरवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वेनोपन्यासाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । अप्रस्तुतलोकसामान्यवृत्तान्तकथनेन राज्ञो दुर्वाससश्शा-

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

(इति पर्याकुलस्तिष्ठति ।)

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी (निश्वस्य ।) अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

भोः, कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाऽविश्रमोऽयं लोकतन्त्राधिकारः । कुतः ।

---

पतिरोहितशकुन्तलाविषयानुरागस्य परिस्फुरणादप्रस्तुतप्रशंसा चेत्यनयोस्संसृष्टिः । अबोधपूर्वं चेतसा स्मरतीति पूर्वकालिकज्ञानरहितपदार्थस्मरणस्य विरोधरूपस्य वस्तुनः भावस्थिराणि जननान्तरसौहृदानीत्यनेन समर्थनाद्विरोधाभासोऽलङ्कारः प्रतीयत इति वस्तुनालङ्कारध्वनिः । वसन्ततिलकं वृत्तम् ॥ २ ॥

आचार इति ॥ राज्ञः अवरोधगृहेषु अवरुध्यन्ते राजस्त्रियोऽत्रेत्यवरोधाः । "अकर्तरि च कारके संज्ञायाम्" इति घञ् । अवरोधाश्च ते गृहाश्च तेषु अन्तःपुरेषु आचारः नियमः । वेत्रयष्टिग्रहणमिति शेषः । इति हेतोः । अवरोधरक्षाधिकृतेन वेत्रयष्टिर्गृहीतव्येत्येवंरूपनियमादित्यर्थः । अवहितेन अप्रमत्तेन मया या वेत्रयष्टिः वेत्ररूपा यष्टिर्दण्डः गृहीता सैव या पूर्वं केवलमाचारार्थमेव गृहीता नतु दौर्बल्यात्सैवेत्यर्थः । बहुतिथे बहूनां पूरणः बहुतिथः "बहुपूगगणसङ्घस्य तिथुक्" इति तिथुक् काले गते अतिक्रान्ते सति । अनेन स्वस्य राजगृहे चिरकालावस्थानात्प्रवेशनिवेदनयोरुचितकालप्रतीक्षाराहित्यं ध्वन्यते । प्रस्थाने गमने विक्लवा स्खलन्ती गतिर्यस्य तस्य मम अवलम्बनार्था शरीरावलम्बनप्रयोजना "अर्थेन सह नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" इति स्त्रीलिङ्गता । तथाभूता जाता । वसन्ततिलकं वृत्तम् ॥ ३ ॥

अनतिपात्यमनतिक्रमणीयम् । अविश्रमः नविद्यते विश्रमो यस्य सः विश्रान्तिरहितः "नोदात्तोपदेशस्य मान्तस्यानाचमे" रिति विश्रसपदे वृद्ध्यभावः । लोकन्तत्रं लोकव्यवहारः प्रकृते रक्षाकर्म तस्मिन्नधिकारः नियोगः अथवा लोके भुवने तन्त्राधिकारः प्रधानाधिकारः "तन्त्रं प्रधाने सिद्धान्ते" इत्यमरः ।

भानुस्सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
शेषस्सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

---

भानुरिति ॥ भानुः सूर्यः सकृत् एकवारमेव युक्ताः सन्नद्धाः तुरङ्गाः अश्वाः येन स तथोक्त एव । अस्तीति शेषः । एकवारमेव रथे तुरगान्योजयित्वाऽविश्रान्तमन्तरिक्षे भ्रमतीत्यर्थः । अनेनाश्वयोजनेऽपि विश्रान्तिरहितत्वान्यकार्येऽविश्रान्तिः किमु वक्तव्येत्यविश्रान्तगमनं ध्वन्यते । अत्र राज्ञः सूर्योपमानेन यथा सूर्यस्य विश्रान्त्यभावस्तथा राज्ञोऽनवरतप्रजापालनव्यग्रता सर्वजनानामज्ञानजनितामार्गप्रवृत्तिनिवारणक्षमत्वं च सूच्यते । गन्धवहः वहतीतिवहः पचाद्यच् । गन्धस्य वहइति षष्ठीसमासः गन्धं वहतीति विग्रहे तु कर्मण्यणि वृद्धौ गन्धवाह इति स्यात् । वायुः रात्रिन्दिवं "अचतुर" इत्यादिना निपातः । अहर्निशं सर्वदेतियावत् । प्रयाति वाति । अत्र पवनोपमानेन राजादेशस्य निरर्गलप्रचारः सूचितः । शेषः सदैव आहितः स्वफणाभिरूढः भूमेर्भारो येन स तथोक्तः । अस्तीत्यध्याहारः । अत्र सर्वत्र वर्तमानकालिकलटा अद्याप्येवमिति तेषामविश्रान्तकार्यव्यासङ्गस्सार्वकालिक इति प्रतीयते सर्वदा भूभारं वहतीत्यर्थः । अनेन शेषस्येव राज्ञो भूमिधारणक्षमत्वं ध्वनितम् । षष्ठांशः । षट्शब्दात् "तस्य पूरणे डट् इति डट्प्रत्यये षष्ठ इति रूपं । ततः "षष्ठाष्टमाभ्यां ञ च" इति भागार्थेऽन्प्रत्ययः । षष्ठश्चासावंशश्च षष्ठांशः सः वृत्तिर्जीवनं यस्य तस्य राज्ञोऽपि एषः एवंलोकतन्त्राधिकारे विश्रमाभावः धर्मः न्यायः । अत्र केचित्पूर्वार्धे भानुः सकृद्युक्ततरङ्गः सन् रात्रिन्दिवं प्रयातीत्यनुयन्ति । तदसङ्गतम् । तथा सति रात्रिन्दिवं प्रयातीत्येतावतैवभिमतार्थसिद्धौ सकृद्युक्ततुरङ्गः इति विशेषणं व्यर्थं स्यात् । गन्धवह इत्यस्यानन्वयश्च स्यात् । गन्धवहः रात्रिन्दिवं प्रयातीत्यावृत्तौ तु गौरवं । तच्च गौरवं न चारुताहेतुः । किञ्च भिन्नपदैस्सामान्यधर्मः प्रतिपादनीय इत्येवंरूपः प्रतिवस्तूमानियमश्च हीयेत । अत उक्तरीत्यान्वयः कार्यः । अत्राविश्रान्तकार्यव्यासरूपस्य सामान्यधर्मस्य भानुस्सकृद्युक्ततुरङ्ग एवेत्यादिभिर्भिन्नपदैः वस्तुप्रतिवस्तुभावेन प्रतिपादनात् प्रतिवस्तूपमा साच मालारूपा षष्ठांशवृत्तेरपि धर्म एष इत्यप्रस्तुतराजसासामान्यवृत्तान्तप्रशंसनेन प्रस्तुतदुष्यन्तवृत्तान्तस्य प्रत्यायनादप्रस्तुतप्रशंसा चेत्यनयोस्संसृष्टिः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

यावन्नियोगमनुतिष्ठामि । (परिक्रम्यावलोक्य च ।) एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवतेश्रान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

(उपगम्य ।) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

---

नियोगम् स्वाधिकारं मुन्यागमननिवेदनरूपम् ।

**प्रजा इति** ॥ द्विपेन्द्रः द्वाभ्यां मुखेन शुण्डादन्डेन च पिवन्तीति द्विपाः । "सुपि स्थः" इत्यत्र सुपीति योगविभागात्कः । तेषां इन्द्रः गजपतिः यूथानि हस्तिकुलानि सञ्चार्य चारयित्वा रविप्रतप्तः भानुसन्तप्त आतपक्लान्त इति यावत् । तथाविधस्सन् दिवा मध्याह्ने शीतं शैत्यजनकं स्थानं वृक्षच्छायामिव अयं दुष्यन्तः प्रजाः जनान् स्वाः प्रजा इव स्वकीयापत्यानीव । "प्रजा स्यात्सन्ततौ जने" इत्यमरः । तन्त्रयित्वा स्वेषु स्वेषु व्यापारेषु नियोज्य श्रान्तं श्रान्तियुक्तं मनश्चेतो यस्य स तथाभूतः सन् विविक्तं विविश्वन्ति जनाः अत्र विविक्तं विजनस्थलं "विचिर् पृथग्भावे" इत्यस्माद्वेव्यार्थत्वादत्यर्थत्वाद्वा "क्तोधिकरणे च" इति क्तः । निषेवते आश्रयते । वर्त्तमानकालव्यपदेशेन विविक्तस्थलाश्रयण-स्याव्यवधानं व्यज्यते । अत्र राज्ञो विविक्तदेशवर्तित्वकथनेन कण्वशिष्यागमने तैः सह संलापादीनामयमेव श्रेयःनवमर इति सूचितं भवति । केचित्तु "निषेवते शान्तमना" इति पाठमाद्रियन्ते । तन्न चतुरं । तथासति रविप्रतप्त इत्युपमान-वाक्यस्थविशेषणस्य विरोधः स्यात् । अतस्तादृशविरोधपरिहारार्थं "श्रान्तमना" इति पाठ एवादरणीय इत्यत्र सहृदयाः प्रमाणम् । वक्ष्यति च "एते वयं क्लान्त-मनसः पुनर्नवीकृताः स्मः" इति । पूर्णोपमालङ्कारः । उपेन्द्रवज्रा वृत्तम् ॥ ५ ॥

उपत्यकारण्यवासिनः उपत्यकारण्यंपर्वतासन्नभूमिगतवनं तद्वासिनः "उपा-धिभ्यांत्यकन्नासन्नारूढयो" रितित्यकन् "उपत्यकाद्रेरासन्नाभूमि" रित्यमरः अत्र-तपस्विनां हिमशैलारण्यवासित्वोक्त्या शीतादिक्लेशसहनपूर्वकं दुष्करतपश्चरणं तेन गौरवातिशयश्चरव्याप्यते । देवः प्रमाणम् यत्कर्तव्यं तद्देव एव जानातीत्यर्थः ॥ अथकिमित्यङ्गीकारे "अङ्गीकृतौस्यादथकिम्" इत्यमरः । श्रौतेन वेदोक्तेन । सत्क्रत्य-

**राजा**—(सादरम् ।) किं काश्यपसंदेशहारिणः ।

**कञ्चुकी**—अथ किम् ।

**राजा**—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्येतान् तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

राजा । (उत्थाय ।) कोऽत्र भोः । (प्रविश्य ।) प्रतीहारी । आणवेदु देवः ।

**राजा**—वेत्रवति, अग्निशरणमार्गमादेशय ।

**प्रतीहारी**—इदो इदो देवो ।

**राजा**—(परिक्रामति । अधिकारखेदं निरूप्य ।) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव । यतः ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेनम् ।

---

१. इत इतो देवः ।

---

पूजयित्वा । तपस्विषु गौरवातिशयेनस्वयमेवेत्युक्तम् ॥ वेत्रवतीतिप्रतीहारी नाम । द्वारदेशस्थिताया स्तस्यास्सर्वदा राजसन्निधानावस्थानादप्रवेशः । प्रतीहारीलक्षणं यथा । "सन्धिविग्रहसम्बद्धंनानाकार्यसमुत्थितम् । निवेदयन्तियाः कार्यं प्रतीहार्यस्तुताः स्मृताः ॥" इति ।

**औत्सुक्येति** ॥ प्रतिष्ठा आस्पदं । राज्यलाभ इतिय वत् । औत्सुक्यमात्रं केवलं तदप्राप्तिनिमित्तामुत्कण्ठाम् । मात्रशब्दो राज्यलाभोत्कण्ठापेक्षया राज्यलाभानन्तरजनितक्लेशस्याधिक्यं द्योतयति । अवसाययति अवसानं करोति । अवपूर्वकात्षोऽतकर्मणीत्यस्माण्णिचि रूपं "शाच्छासाह्वाव्यावेपां युक्" इति युगागमः । अवसादयतीति पाठे सीदतेर्ण्यन्तस्य रूपं । लब्धस्य राज्यस्य परिपालने संरक्षणे विषये वृत्तिर्व्यापारः परिपालनाय वृत्तिरिति केषांचिद्व्याख्यानं तु तदर्थेन समासस्य प्रकृतिविकृतिभावावगतावेवाभ्युपगमात्प्रकृते च प्रकृतिविकृतिभावस्याभावाच्चतुर्थीसमासस्यानुपपत्तेश्चिन्त्यम् । अतएवाश्वघासादयः षष्ठीसमासा इति

नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥

(नेपथ्ये ।)

वैतालिकौ—विजयतां देवः ।

---

सिद्धान्तितम् । एनं राजानं क्लिश्नाति । अभिलषितराज्यलाभादौत्सुक्यमात्रं निवर्तते । किन्तु लब्धपरिरक्षणं महान्तं क्लेशमावहतीत्यर्थः ननु राज्यस्य क्लेशावहत्वे कथं तत्प्राप्तिः सर्वैराशास्यत इत्याशङ्कां कविर्दृष्टान्तमुखेन परिहरति—नेति । राज्यं स्वहस्तेन धृतो दण्डो यस्य तदातपत्रं आतपात्त्रायत इत्यातपत्रं "अन्येष्वपि दृश्यते" इति डप्रत्ययः । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचिड्डप्रत्ययो भवति अतएव "इको गुणवृद्धी" इति सूत्रे भाष्ये इदमेव निरूप्य परितः खाता परिखेत्युदाहृदम् । अतोऽत्रापादाने आतपे उपपदे डप्रत्ययः सिध्यति । "भीत्रार्थानाम्" इत्यातपस्यापादानत्वं । अथवा सुपीति योगविभागात्कः । "आतोऽनुपसर्गे" इति कप्रत्ययस्तु कर्मण्युपपदे विधानादपादाने उपपदेऽत्र न भवति छत्रमिव अतिश्रमापनयनाय अधिकायासनिवारणाय न भवति । श्रमाय खेदाय च न भवति । यथा वर्षातपनिवारणार्थमात्मना करेण छत्रे धृते वर्षातपनिवारणरूपं सुखं छत्रवहनरूपश्रमश्च भवति । तथा राज्यलाभोत्कण्ठाविनाशान्मनसो निर्वृतिश्च राज्यलाभादनवरतमात्मीयप्रजानां विनयाधानरक्षणभरणादिक्लेशशतबाहुल्यं भवति । तथा च सर्वैरनुकूलतया वेदनीयस्यैव सुखशब्दवाच्यत्वाद्राज्याधिगमसुखस्य दुःखसंस्पृष्टत्वादुःखत्वेनैव व्यवहारो युज्यत इति "राज्ञां तु चरितार्थता दुःखोत्तरैव" इति पूर्ववाक्यमनेन श्लोकेन समर्थितामिति वेदितव्यम् । अत्र राज्यं श्रमापनयश्रमवत् । औत्सुक्यावसानपूर्वकलब्धपरिपालन क्लेशजननात् यथा स्वहस्तधृतदण्डं छत्रमिति पक्षसाध्यहेतूदाहरणसहचरितस्यानुमानस्य सम्भवात्तर्कन्यायमूलोऽयमनुमानालङ्कारः । यच्छ्रमापनयनाय न भवति तच्छ्रमायन भवतीत्यापाततः प्राप्तस्य विरोधस्य राज्यस्य दुः खसंस्पृष्टत्वरूपप्रतीयमान-हेतुना समाधानाद्विरोधाभासोऽलङ्कारः । औत्सुक्यमात्रमिति वाक्यस्य नातिश्रमायेत्यत्र, क्लिश्नातीत्यस्य नच श्रमायेत्यत्र च क्रमेणान्ययाद्यथासंख्यालङ्कारः । चतुर्थचरणे स्पष्ट एवोपमालङ्कारः । विरोधाभासयथासंख्योपमानां संसृष्टिः । संसृष्टेनाङ्गेनानुमानालङ्कारोऽङ्गी सङ्कीर्यते । वसन्ततिलकं वृत्तम् ॥ ६ ॥

अधिकारखेदं निरूप्येत्यादिना यःखेदो निबद्धस्स परोपकारनिरतानां राज्ञां स्वभावसिद्ध इत्याह स्वसुखेति ।

**प्रथमः—**

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

**द्वितीयः—**

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।

---

**स्वेति** ॥ स्वस्य आत्मनः सुखे अन्तः पुरविहारादिसुखविषये निरभिलाषः वीतस्पृहः सन् लोकहेतोः प्रजानिमित्तम् । प्रजानां सुखोत्पादनार्थमिति यावत् । खिद्यसे जितामित्रतया तत्तद्वर्णोचितमार्गप्रवर्तकतयापरं दूयसे । तौदादिकस्य "खिद परिघाते" इत्यस्य कर्मकर्तरि प्रयोगोऽयम् । यथाह वामनः "कर्मकर्तरीत्यनुवर्तमाने खिद्यस इति च खिद्यत इति च प्रयोगो दृश्यते । सोऽपि कर्मकर्तर्येव द्रष्टव्यो न कर्तर्यदैवादिकत्वात् खिदेः" इति । दैवादिकस्य "खिद दैन्ये" इत्यस्य कर्तरि रूपमिति दुर्गसिंहः । तव राजशब्दमात्रं जागर्ति । उपयोगस्तु प्रजानामिति भावः । अथवा ते वृत्तिः । एवंविधैव उक्तप्रकारैव । आत्मनो दुःखानुभवपूर्वं परसन्तापनिवारकत्वमेवेत्यर्थः । एतदेव दृष्टान्तेन स्फुटयति । अनुभवतीति । पादपः घर्मार्तानां पादान् पातीति पादपः अतएव न वृक्षादिपदप्रयोगः । मूर्ध्ना शिरसा तीव्रं पत्रशाखात्वक्शोषकमुष्णमातपं अनुभवति हि । हिः प्रसिद्धौ । छायया प्रातर्मध्याह्नसायंसमयेष्वेकरूपया संश्रितानां स्वाधः प्रदेशमाश्रितानां परितापं सन्तापं शमयति । परार्थे क्लेशसहनं महतां सहजमित्यर्थः । राजपादपयोर्बिम्बप्रतिबिम्बभावेन समन्वयाद्दृष्टान्तालङ्कारः । अयञ्च स्वभावोक्त्या संसृज्यते । उत्तरार्धे पादपवृत्तान्तरूपवस्तुप्रतिपादनेन सज्जनवृत्तान्तस्य प्रतीयमानत्वात्समासोक्तिरिति वस्तुनालङ्कारध्वनिः । मालिनीवृत्तम् ॥ ७ ॥

**नियमयसीति** ॥ त्वं आत्तदण्डः गृहीतदण्डनीतिः सन् विमार्गप्रस्थितान् विरुद्धमार्गप्रयातान् । अन्यायवर्तिन इति यावत् । नियमयसि दमयसि । यथाह भृगुः "यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ॥ अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥" इति । विवादं कलहं प्रशमयसि । युक्तायुक्तविचारेण निराकरोषि । रक्षणाय परिपालनाय कल्पसे समर्थो भवसि । रक्षणायेत्यत्र "क्लृपि सम्पद्यमाने

अतनुषु विभवेषु ज्ञातयस्सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

राजा—एते वयं क्लान्तमनसः पुनर्नवीकृताः । स्मः । ( इति परिक्रामति । )

प्रतीहारी—ऐसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू-अग्गिसरणालिन्दो । आरुहदु देवो ।

राजा—( आरुह्य परिजानांसावलम्बी स्थित्वा । ) वेत्रवति, किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।

---

१. एषोऽभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देवः ।

---

च" इति चतुर्थी । प्रजानां अतनुषु प्रभूतेषु विभवेषु धनेषु सत्सु ज्ञातयः बन्धवाः सन्तुनाम सम्भवन्तुनाम । कुक्षिम्भरिभिस्तैः किं प्रयोजनमिति भावः । तासां बन्धुकृत्यं बन्धूनां कृत्यं विमार्गान्निवर्तनं, कलहशमनं, सम्यक्पालनं, विपत्सम्पदोरेकरूपतया हितचिन्तनमित्येवमादिकं कार्यं त्वयि तु त्वय्येव परिसमाप्तं पर्यवसितं त्वयैव निष्पाद्यत इत्यर्थः । अत्र त्वयि तु परिसमाप्तमित्यादिवाक्यार्थं प्रति नियमयसीत्यादिवाक्यार्थानां हेतुत्वेनोपन्यासाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । प्रजाविषये बन्धुदुष्यन्तयोर्मध्ये दुष्यन्ते विशेषप्रतिपानाद्व्यतिरेकः । अनयोश्च संसृष्टिः ॥ मालिनी वृत्तम् ॥ ८ ॥

नवीकृताः वैतालिकयोस्सूनृतवचनेनारिवन्नमनसः कृताः । अभिनवसम्मार्जन सश्रीकः अभिनवं नूतनं यत्सम्मार्जनं तेन सश्रीकः सशोभः सन्निहितहोमधेनुः समीपावस्थिताग्निहोत्रधेनुः विशेषणद्वयेन पवित्रतातिशयो ध्वन्यते ॥ अग्निशरणालिन्दः अरन्यगारवहिर्द्वारप्रकोष्ठः पारजनांसावलम्बीति खेदातिशयद्योतनार्थमुक्तम् ।

किं दावदिति ॥ उपोढं धृतं तपो यैस्तादृशानां व्रतिनां तपः नियमेनावस्थितिः निघ्नैः राक्षसादिकृतैः प्रत्यूहैः दूषितं किं विहतं किं । किमिति वितर्के । "किंवितर्के परिप्रश्ने" इत्यमरः । उत अथवा धर्मारण्यचरेषु धर्मप्रधानमरण्यं धर्मारण्यं तत्र चरन्ति धर्मारण्यचराः "चरेष्ट" इति टप्रत्ययः । तेषु तपोवनवर्तिष्वि-

आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

प्रतीहारी—सुचरिदाहिणन्दिणो इसीओ देवं सभाकइदुं आअदेत्ति तक्केमि।

(ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः। पुरश्चैषां कञ्चुकी पुरोहितश्च।)

कञ्चुकी—इत इतो भवन्तः।

शार्ङ्गरवः—शारद्वत,

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।

१- सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि।

त्यर्थः। अत्र मुनीनां प्रभावं सूचयता धर्मपदेन चेष्टितस्यात्यन्तमनुचितत्वं ध्वन्यते। प्राणिषु हरिणादिजन्तुषु विषये केनचित् येन केनचिद्धूर्तेन असत् असाधु चेष्टितं किं चरितं किं। आहोस्वित् अथवा ममापचरितैः दुश्चेष्टाभिः वीरुधांलतानां प्रसवः पुष्पफलादिः विष्टम्भितः प्रतिषिद्धः किं। तथा चोक्तम्। "राज्ञोपचारात्पृथिवी स्वल्पसस्या भवेत्किल। अल्पायुषः प्रजाः सर्वा दरिद्रा व्याधिपीडिताः" इति इत्थं आरूढाः आविर्भूताः बहवः प्रतर्काः विकल्पाः यस्मिन् तथाभूतं अपरिच्छेदेनानिर्णयेनाकुलं विक्लवं जातमिति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

**महाभाग इति**॥ कामं यद्यपि असौ नरपतिः महाभागः महाभाग्यः अभिन्ना अत्यक्ता स्थितिर्मर्यादा येन सः अनुत्क्रान्तधर्ममर्याद इत्यर्थः। अनेन रक्षाशुल्कषड्भागग्राहकत्वेन धर्मैकायत्तवित्तत्वं द्योत्यते। नरपतेरभिन्नस्थितित्वमेव दर्शयति—न कश्चिदिति। वर्णानां मध्ये अपकृष्टोपि हीनः शूद्रादिरपि अपथं कुमार्गं "अपथं नपुंसकं" इति न पुंसकत्वम्। न भजते न सेवते। अनेन प्रजानां विनयाधानरक्षणभरणादौ राज्ञः सामर्थ्यं सूचितम्। तथापि शश्वत् सर्वदा परिचितं सेवितं विविक्तं विजनस्थानं येन तथाविधेन मनसा उपलक्षणे तृतीयेयम्। तादृशेन मनसोपलक्षितोहं जनाकीर्णं प्रजासंकुलमिदं राजभवनं हुतवहपरीतं अनलसंक्रान्तमिव। वहतीति वहः "पचाद्यच्" हुतस्य वहो हुतवह इति शेषषष्ठ्यन्तेन सह समासः। मन्ये तर्कयामि। यद्यपि "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः" इत्युक्तेरिवादिशब्दवन्मन्येशब्दोऽप्युत्प्रेक्षा-

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

शारद्वतः—स्थाने भवान्पुरप्रवेशादित्थंभूतः संवृत्तः । अहमपि,

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

शकुन्तला—(निमित्तं सूचयित्वा ।) अम्हहे, किं मे वामेदरं णअणं विप्फुरदि ।

---

१. अहो किं मे वामेतरन्नयनं विस्फुरति ।

---

व्यञ्जकः । तथाप्युत्प्रेक्षासामग्र्यभावे मन्येशब्दो वितर्कमेव बोधयतीति प्रकृते मन्येशब्दस्य नोत्प्रेक्षाव्यञ्जकत्वमिति ज्ञेयम् । अत्र द्वितीयपादे वर्णानां मध्येऽप्रकृष्टोऽप्यपथं न भजत इत्युक्त्वा उत्तमस्य ब्राह्मणादेरपथेऽप्रवृत्तिः कैमुत्यन्यायसिद्धेति काव्यार्थापत्तिरलङ्कारः । तदुक्तम् । "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इति । उत्तारार्धे उपमालङ्कारः । अपिच पूर्वार्धे प्रतिपादितस्य राज्ञोधर्मपरायणत्वस्य कारणस्य सत्वेऽप्युत्तरार्धे तत्कार्यरूपस्य राजस्थानसमीचीनत्वस्यानुत्पत्तिप्रतिपादनाद्विशेषोक्तिः । साच पूर्वोक्ताभ्यामर्थापत्त्युपमाभ्यामङ्गाभ्यां संसृष्टाभ्यां सङ्कीर्यते ॥ शिखरिणी वृत्तम् ॥ १० ॥

अभ्यक्तमिति ॥ स्नातः कृतस्नानः पुरुषः । स्नात इति "गत्यर्थाकर्मक" इत्यादिनाऽकर्मकत्वात्कर्तरि क्तः । एवं प्रबुद्धः सुप्तइत्यत्रापि अभ्यक्तमिव तैललिप्तसर्वाङ्गं पुरुषमिव । "तैलाभ्यङ्गे चिताधूमे मैथुने क्षौरकर्मणि । तावद्भवति चण्डालो यावन्न स्नानमाचरेत्" इति तैलाभ्यक्तस्यास्पृश्यत्वमुक्तम् । शुचिः सद्वृत्तः । अशुचिं असद्वृत्तमिव । प्रबुद्धः जागरितः सुप्तमिव निद्रितमिव स्वैरगतिः स्वच्छन्दचारी बद्धमिव संयतमिव इह जगति सुखसङ्गिनं विषयसुखासक्तं जनं अवैमि जानामि मालोपमालङ्कारः । आर्या वृत्तम् ॥ ११ ॥

निमित्तम् दक्षिणाक्षिस्पन्दनरूपापशकुनम् । विस्रब्धकार्या विस्रब्धं अक्रूरं कार्यं येषान्ते । कुतूहलगर्भोपहितः कुतूहलेन गर्भे मध्ये उपहितः युक्तः । अनिर्वर्णनीयमदर्शनीयम् । हस्तमुरसिकृत्वेतिस्त्रीस्वभावोक्तिः ॥ अर्थवान् लोकरञ्जकत्वादन्वर्थः लोकानुग्रहायभुवनानुग्रहाय अनेन त्रिभुवनानुग्राहकत्वेन लोकोत्तरातपस्सिद्धिस्सूचिता । स्वाधीनकुशलास्सिद्धिमन्त इत्येतदनुरूपमेवोत्तरम् ॥ अनामयप्रश्नपूर्वम् अनामयप्रश्नः पूर्वो यस्मिन् कर्मणि तत्तथोक्तम् आरोग्यप्रश्नपूर्वकम् इदञ्चास्य क्षत्रिय-

**गौतमी**—[1]जादे, पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ वितरन्दु । (इति परिक्रामति ।)

**पुरोहितः**—(राजानं निर्दिश्य ।) भो भोस्तापस्विन असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

**शार्ङ्गरवः**—भो महाब्राह्मण, काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः । कुतः ।

भवन्ति नम्रास्तरवः फलोद्गमै-
नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥

**प्रतीहारी**—[2]देव, पसण्णमुहवण्णा दीसन्ति । जाणामि वीसद्धकज्जा इसीओ इत्ति ।

---

१. जाते, प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।
२. देव, प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विस्रब्धकार्या ऋषय इति ।

---

त्वात् । तदुक्तं "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेवच ॥" इति । मिथस्समयात् गान्धर्वेण विधिनेत्यर्थः । उपायंस्त-विवाहितवान् "उपायमः स्वकरणे" इत्यात्मनेपदम् ॥

**भवन्तीति** ॥ तरवः वृक्षाः फलानामुद्गमैः उद्भवैर्हेतुभिः नम्राः अधोमुखाः विनीताश्च भवन्ति । घनाः मेघाः नवाम्बुभिः प्रत्यग्रजलैः । नवपदेन वर्षासमयारम्भो द्योत्यते । तेषां तदानीमेव जलपूर्णत्वाद्दूरविलम्बितत्वं सम्भवति । अथ च विनीता भवन्तीति च गम्यति । दूरविलम्बिनः भूमेरदूरवर्तिनः भवन्तीति च गम्यते । एवं सत्पुरुषाः समृद्धिभिः धनसम्पात्तिभिः अनुद्धताः अनहङ्कारिणः । नम्रा इति यावत् । भवन्तीति शेषः । एषः पूर्वोक्तनम्रत्वादिः परोपकारिणां परोपकृतिरतानां स्वभाव एव निसर्ग एव । सत्पुरुषाणां विनीतत्वस्याजन्मसिद्धतया न वयं तत्प्रशंसापदं मन्यामहे इति तात्पर्यम् । अत्र तरुघनसत्पुरुषाणां विनीतत्वस्य नम्राः, दूरविलम्बिनः, अनुद्धताः इति भिन्नपदैः पतिपादना-

**राजा**—(शकुन्तलां दृष्ट्वा) अथात्रभवती

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥

**प्रतीहारी**—[1]देव, कुतूहलगब्भोपहिदो ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीअदि ।

**राजा**—भवतु भवतु । अनिर्वर्णनीयं परकलत्रम् ।

**शकुन्तला**—(हस्तमुरसि कृत्वा । आत्मगतम् ।) [2]हिअअ, किंएव्वं वेवासि अज्जउत्तस्स भावं अणवधारिअ । धीरं दाव होहि ।

---

१. देव कुतूहलगर्भोपहितो न मे तर्कः प्रसरति ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ।

२. हृदय, किमेवं वेपसे आर्यपुत्रस्य भावमनवधार्य । धीरं तावद्भव ।

---

न्मालाप्रतिवस्तूपमा । इयं च स्वभाव एवैष परोपकारिणामित्यर्थान्तरन्यासेनाङ्गेन सङ्कीर्यते । किंच दुष्यन्तलक्षणे प्रस्तुतेऽप्रस्तुतसज्जनवृत्तान्तप्रतिपादनादप्रस्तुतप्रशंसाचेत्यनयोः संसृष्टिः ॥ वंशस्थं वृत्तम् ॥ १२ ॥

केति ॥ पाण्डुपत्राणां पक्वपर्णानां मध्ये किसलयमिव सर्वजनस्पृहणीयं कोमलपल्लवमिव । किसलयपदस्य भिन्नलिङ्गत्वेनोपमानानर्हत्वेऽपि कोमलत्वादेः साधारणधर्मस्य गम्यत्वात्सहृदयमनोरञ्जकत्वमित्यवगन्तव्यम् । तपोधनानां अज्ञातनागरिकवृत्तीनां तपस्विनां मध्ये अवगुण्ठनवती शिरः प्रावरणवती । अनेन यदीयं तापसकन्यका तदाऽविज्ञातमदनविकारतया सर्वत्र समबुद्धित्वेन चावगुण्ठनं न स्यादिति वितर्कस्य युक्तत्वं गम्यते । नातिपरिस्फुटं अनतिव्यक्तम् । ईषद्व्यक्तमित्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । तथाभूतं शरीरलावण्यं देहसौन्दर्यं यस्याः सा । अनेनापन्नसत्वात्वं गम्यते । अत्रातिपर्योरात्यमात्रस्य ग्रहणे शरीरलावण्यस्याल्पत्वं प्रतिपादितं स्यात् । द्वितीयमात्रस्य ग्रहणे शरीरस्य लावण्यं न प्रसज्येत । अत उभयोरुपादानम् अनेनापन्नसत्वात्वेन शरीरलावण्यमातिमात्रं न दृश्यत इत्यर्थः । लावण्यलक्षणं यथा । "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इति । तादृशीयं कास्वित् का वा भवेत् । स्विदिदि वितर्के । एतादृश्या सहैवैतेषां मत्समीपागमने हेतुर्वितर्क्यत इति भावः । उपमालङ्कारः । आर्या वृत्तम् ॥ १३ ॥

**पुरोहितः**—(पुरोहितः गत्वा ।) एते विधिवदर्चितास्तपस्विनः । काश्चिदेषामुपाध्यायसन्देशः । तं देवः श्रोतुमर्हति ।

**राजा**—अवहितोऽस्मि ।

**ऋषयः**—(हस्तमुद्यम्य) विजयस्व राजन् ।

**राजा**—सर्वानभिवादये वः ।

**ऋषयः**—स्वस्ति भवते इष्टेन युज्यस्व ।

**राजा**—अपि निर्विघ्नतपसो मुनयः ।

**ऋषयः**—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

**राजा**—अर्थवान्खलु मे राजशब्दः । अथ भगवांल्लोकानुग्रहाय कुशली काश्यपः ।

**ऋषयः**—स्वाधीनकुशलाः सिद्धिमन्तः स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

**राजा**—किमाज्ञापयति भगवान् ।

**शार्ङ्गरवः**—यन्मिथःस्समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

---

कुत इति ॥ त्वयि सतां रक्षितरि कर्मणिषष्ठी पालके सति "यस्य च भावेन भावलक्षणम्" इति सप्तमी । धर्मक्रियाणां विघ्नः कुतः स्यात् कस्माद्धेतोरापतेत् । त्वद्रक्षितानां सतां क्रियामात्रेऽपि विघ्नो न संभाव्यते । धर्मक्रियाविघ्नः सुतरामसम्भावित इत्यर्थः । तत्र दृष्टान्तमाह—तम इति । घर्माः उष्णाः अंशवः किरणाः यस्य तस्मिन् घर्मांशौ तपति सति तमः तिमिरं कथमाविर्भविष्यति अत्र तपतीत्युक्त्या सूर्ये तपति तमसोऽप्रसक्तिरेवेति तस्य सुतरामाविर्भावाभावस्सूचितः । उदयमान इत्युक्तौ तु पूर्वकालिकतमसः किञ्चिदवशिष्टत्वं द्योत्येत । न त्वनाविर्भावः । अतएवोपमेयवाक्ये रक्षितरीति प्रयुक्तम् । न तु रक्षितुमीहमान इत्यादीति ज्ञेयम् । पथ्यावक्त्रं वृत्तम ॥ १४ ॥

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणौ वधूवरौ-
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदियमिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**—[1]अज्ज, किंपि वत्तुकामाह्मि । ण मे वअणावसरो अत्थि । कहंत्ति ।

---

१. आर्य, किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।
नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः ।
एकैकमेव चरिते भणामि किमेकैकस्य ॥

---

त्वमिति ॥ यत् यस्मात् त्वं अर्हतां आभिजात्यादिगुणसम्पत्त्या पूजार्हाणां प्राग्रसरः श्रेष्ठः सरतीति सरः अग्रे सरः अग्रसरः, प्रकर्षेण अग्रसर प्राग्रसरः अद्यपि "पुरोऽग्रतोऽग्रेषु सर्तेः" इत्युक्तेरग्रेसर इत्येकारान्तरूपमेव न्याय्यम् तथापि प्रकृते सर्तेः पचाद्यचि सरशब्दस्याग्रशब्देन नित्यः सप्तमीसमासः । बहुलग्रहणादलुङ्नेति कथञ्चिदुपपत्तिः कल्पनीया । प्राग्रहर इति पाठे प्रकृष्टमग्रं प्राग्रं प्राग्रे हरति "हरतेरनुद्यमनेऽच्" इत्यच् । नः अस्माकं सम्बन्धिनी शकुन्तला मूर्तिमती शरीर धारिणी सत्क्रियेव सती पूज्या चासौ क्रिया चेवेत्युत्प्रेक्षा । अनेनास्यां अखिलजनपूज्यत्वमुक्तम् । तुल्यगुणौ तुल्यः अनुरूपो गुणो ययोस्तौ । वधूवरौ वधूश्च वरश्च तौ तुल्यगुणं वधूवरमिति पाठेतु वधूश्च वरश्च तयोः समाहारः । "स नपुंसकं" इति नपुंसकत्वम् । समानयन् संयोजयन् समाङ्पूर्वान्नयतेः शतृप्रत्ययः । प्रजापतिर्ब्रह्मा चिरस्य चिरकालस्य । अत्र चिरस्येति विभक्तिप्रतिरूपकमव्ययम् । वाच्यं अननुरूपसंघटनाप्रयुक्तां निन्दां न गतः । गत्यर्थेत्यादिना कर्तरि क्तः । रत्नकाञ्चनयोरिव तुल्ययोः शकुन्तलादुष्यन्तयोर्मेलनेनैतावत्पर्यन्तं जगत्यतुल्यगुणवधूवरसंघटनजनितापवादादद्यैवमुक्तो विधिरिति भावः अत्र पूर्वार्धे मूर्तिमतीसत्क्रियेवेत्युत्प्रेक्षा । प्रकृष्टगुणविशिष्टत्वरूप सामान्यधर्मस्य वाक्यद्वयेन भिन्नपदैः प्रतिपादनात्प्रतिवस्तूपमाचेत्यनयोरङ्गाङ्गिभावेन सङ्करः अस्य च सङ्करस्योत्तरार्धे तुल्यगुणयोश्शकुन्तलादुष्यन्तयोर्मेलनकथननिबन्धनस्य समालङ्कारस्य चाङ्गाङ्गिभावलक्षणस्सङ्करः ॥ १५ ॥

णावेक्खिओ गुरुअणो तुए इमाएण पुच्छिदा वन्धू ।
पक्कक्कमे व्व चरिदे मणामि किं यक्कएक्कस्स ॥ १६ ॥

शकुन्तला—(आत्मगतम्) [1]किं णु क्खु अज्जउत्तौ भणादि ।

राजा—किमिदमुपन्यस्तम् ।

शकुन्तला—(आत्मगतम् ।) [2]पावओ क्खु वअणोवण्णासो ।

शार्ङ्गरवः—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्त विष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
तदप्रियापि प्रमदा स्वबन्धुभिः ॥ १७ ॥

---

१. किं नु खल्वार्यपुत्रो भणति ।
२. पावकः खलु वचनोपन्यासः ।

---

**णावेक्खिओ इति** । हे दुष्यन्त, त्वया गुरुजनः पित्रादिर्नापेक्षितः । तथानया शकुन्तलया वन्धवः न पृष्टाः एकैकमेव परस्परमेव गुर्वाद्यननुज्ञयेति भावः । चरिते अनुष्ठितविवाहरूपे कार्ये एकैकस्य युवयोरन्यतरस्य । कर्मणःशेषत्वविवक्षया षष्ठी किं भणामि । यतोऽयं गुर्वादिवहुजनानुज्ञासापेक्षोऽपि परिणयोभवद्भ्यां परस्परानुरागेणैव निर्वर्तितस्ततो नास्मिन्विषये कश्चित्किंचिद्वक्तुं शक्नोतीति भावः ॥१६॥

वचनोपन्यासः वाक्प्रयोगः लोकवृत्तान्तनिष्णाताः लोकाचाराभिज्ञाः "निनदीभ्यांस्नातेः कौशले" इति निष्णातशब्दस्यणत्वम् ।

**सतीमिति** । भर्तृमतीं विद्यमानपतिकां सतीमपि साध्वीमपि ज्ञातिकुलं पितृगृहं एकः संश्रयो यस्यास्तां स्त्रियं जनः लोकः न तु शत्रुमात्रजनः अन्यथा प्रकारान्तरेण । असाधुत्वेनेति यावत् । अत्रान्यथेतिपदप्रयोगः काव्ये चारुता हेतुः । अतएवासुधुत्वेनेत्यादिनोपात्तम् । विशंकते सम्भावयति । भर्तृत्यमुस्साध्व्या अपि सार्वकालिकपितृगृहावस्थानमपवादास्पदमित्यर्थः । अतः अस्माद्धेतोस्तादृशजनापवादपरिहारार्थमित्यर्थः । तस्य परिणेतुः अप्रियापि अपिशब्देनभर्तृगृहावस्थितित्यागस्य समीचीनहेतौ सत्यपीत्यर्थोद्योत्यते । प्रमदा प्रकृष्टस्तारुण्यमदो यस्याः सा युवतिरित्यर्थः । न तु वृद्धा । स्वबन्धुभिः स्वकीयैः पित्रादिभिः परिणेतुर्भर्तुः समीपे इष्यते

राजा—किं वात्रभवती मया परिणीतपूर्वा ।

शकुन्तला—(सविषादम् । आत्मगतम् ।) [1]हिअअ; संपदं जुत्तं दे आसङ्का ।

शार्ङ्गरवः—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

राजा—कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

---

१. हृदय, सांप्रतं युक्त ते आशङ्का ।

---

अभिलष्यते सर्वथा प्रमदया भर्तृसमीपस्थितैव भाव्यमिति भावः । अत्र शकुन्तलायास्त्वत्समीपेऽवस्थितिर्न युक्तेति विशेषे प्रस्तुते यत्सामान्यस्य वचनं साप्रस्तुतप्रशंसा । वंशस्थं वृत्तम् ॥ १७ ॥

असत्कल्पनाप्रश्नः असतः अविद्यमानार्थस्य कल्पनया सम्पादनयाकृतः प्रश्नः "तृतीयातत्कृतार्थे" ति समासः ।

किमिति । कृते स्वेच्छयानुष्ठिते कार्ये गान्धर्वविवाहविधिना शकुन्तलापरिणयरूपे द्वेषः असहनत्वं किम् । किमिति प्रश्ने । यावन्नानुभूतं तावदेव कस्मिंश्चिदासक्तिरिति न्यायेन तदानीं यत्किञ्चित्कृतं तदिदानीं निर्वर्तितप्रयोजनोऽहं नापेक्ष इति जुगुप्सया तत्र द्वेषः किमिति प्रश्नः । धर्मं प्रति विमुखता वैमुख्यं किंविध्युक्तगान्धर्वविवाहपरिणीतपत्नीत्यागादद्यप्रभृतिधर्मवैमुख्यं दीक्षितं किमिति प्रश्नः । अवज्ञा अस्मास्ववहेलना कृता विहिता । विध्युक्तगान्धर्वविधानेन सानुरागं स्वयमेवपरिणीतां शकुन्तलामनुमतिपूर्वकं भवत्सन्निधिं प्रेषयतो मुनेः कण्वस्यानुशासनवचनस्य निराकरणादिति भावः । कुतोयमसत्कल्पनाप्रश्न इति राजवाक्येनोद्दिष्टासत्कल्पनामुत्तरार्धेन निरस्यति मूर्च्छन्तीति । अमी विकाराः कृतकार्यद्वेषादयः ऐश्वर्यमत्तेषु धनमदान्धेषु प्रायेण प्रायशः मूर्छन्ति वर्धन्ते अत्र पूर्वार्धोक्तार्थस्य विशेषरूपस्योत्तरार्धे सामान्येन समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

**गौतमी**—जादे, मुहुत्तअं मा लज्जसु । अवणइस्सं दाव दे ओउण्ठणं तदो तुमं भट्टा अहिजाणिस्सदि । (इति यथोक्तं करोति ।)

**राजा**—(शकुन्तलां निर्वण्य । आत्मगतम् ।)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ १९ ॥

(इति विचारयन्स्थितः ।)

**प्रतीहारी**—(जनान्तिकं ।) अहो धम्मावेक्खिआ भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि ।

---

१. जाते, मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति ।

२. अहो धर्मावेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति ।

---

यथोक्तमवगुण्ठापनयनन् । निर्वण्यदृष्ट्वा ।

**इदमिति** । एवं अनेन प्रकारेण उपनतम् । अयत्नप्राप्तमित्यर्थः । न क्लिष्टा कान्तिर्यस्य तत् अक्लिष्टकान्ति अम्लानशोभं इदं रूपं प्रथमपरिगृहीतं प्रथमं पूर्वं परिगृहीतं पत्नीत्वेन स्वीकृतं स्यात् न वा स्यात् इत्यव्यवस्यन्ननिश्चिन्वन्नहं विभाते प्रभाते । प्रभात इत्यनेनानन्तरं रविकिरणैर्हिमेऽपनीते सति मकरन्दभोग सम्भवेत् । एवमिहापि शापे निवृत्तेऽनन्तरमविरोधी कामोपभोगो भविष्यतीति रतेर्दार्ढ्यं ध्वनितम् । अन्त अभ्यन्तरे तुषारः हिमं यस्य तत्तथोक्तं कुन्दं कुन्दस्य पुष्पम् । "पुष्पमूलेषु बहुलम्" इति नपुंसकत्वात्प्रत्ययस्य लुक् । भ्रमरःषट्पद इव परिभोक्तुं अनुभवितुं न च शक्नोमि । नैव प्रभवामि हातुं त्यक्तुं च नैव शक्नोमि न समर्थो भवामि । खल्विति वाक्यालङ्कारे । उपमालङ्कारः । मालिनी वृत्तम् ॥१९॥

धर्मापेक्षिता परदारग्रहणरूपाधर्मभीरुत्वम् । जोष्मास्यते तूष्णीं स्थीयते । अभिव्यक्तसत्वलक्षणाम् अभिव्यक्तं सम्यग्दृश्यमानं सत्वलक्षणं गर्भचिह्नं यस्यास्तां प्रकटगर्भलक्षणामित्यर्थः । क्षेत्रिणसा शङ्कमानः कलत्रिणं मन्यमानः यद्यहमन्तर्पत्नीमिमां परिगृह्णीयां तदाहं क्षेत्रीस्यान्नतुबीजी । एतज्जातापत्यंक्षेत्रजमेव भवेन्नौरसम् । अथवान्येनोढाया अस्याः परिग्रहे नधर्मपत्नीत्वंभवेदिति भावः ॥ दूराधि-

शार्ङ्गरवः—भो राजन्, किमिति जोषमास्यते ।

राजा—भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

शकुन्तला—(अपवार्य ।) अज्जस्स परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ।

शार्ङ्गरवः—मा तावत्

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

१. आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा ।

रोहिणी दूरं अतिमात्रं महिषीपदंप्राप्स्यामीत्यादिकं अधिरोढुं शीलं यस्यास्सा । मातावदित्यस्य वक्ष्यमाणश्लोकेनान्वयः ।

कृतेति । त्वया कृताभिमर्शा कृतः अभिमर्शः संग्रहणं यस्यास्तां प्रलोभादिना स्ववशमानीय कृतसंभोगामित्यर्थः । अनेनातिशयापराधकृत्त्वं ध्वन्यते । तथाभूतां सुतां अनुमन्यमानः अनुरूपवरप्राप्तिर्जातेत्यनुमोदमानः मुनिः अनेन सापराधेऽपि त्वयि मुनित्वेन तादृशकृपा युज्यत इत्यर्थः । विमान्यो नाम तिरस्कार्यः किल । नामेति कुत्सायाम् । "नामप्रकाश्यसंभाव्यक्रोधोपगमकुत्सने" इत्यमरः । अनेन मुनेरसन्निधानेऽपि प्रियवचनैः शकुन्तलां विलोभ्य कृतं त्वत्परिणयं निरतिशयानुग्रहबुद्ध्यास्वीकुर्वन्महर्षिरेव गर्हणीय इत्यर्थः। एवं विमाननीयत्वे हेतुमाह—मुष्टमिति । मुष्टं चोरितं न तु स्वारसिकतया दत्तं स्वं अर्थं कन्यारूपं धनमिति यावत्। प्रतिग्राहयता प्रतिगृह्यतामियमित्युपच्छन्दयता पुरुषेण दस्युरिव येन मुनिना त्वं पात्रीकृतः दानयोग्यः कृतः स मुनिर्विमाननीय इति पूर्वेणान्वयः । यथा चोरः स्वापहृतं द्रव्यं स्वस्मा एवार्पयतोऽपिपुरुषादगृह्णंस्तस्यैवविमाननां जनयति तद्वदिति भावः । अनेन तवाभिजात्यादिगुणं विचिन्त्य त्वदभिमर्शलक्षणस्तवापराधो मुनिना सोढः । तादृशे अनिष्टमाचरंस्त्वमेव निन्द्य इति निन्दया निन्दाया अभिव्यक्तेर्व्याजनिन्दालङ्कारः । व्याजनिन्दा चाङ्गेनोपमालङ्कारेण सङ्कीर्यते अनेन सङ्करेण

शारद्वतः—शार्ङ्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

शकुन्तला—(अपवार्य ।) ईमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणिं मे सोअणीओ त्ति ववसिदं एदं । (प्रकाशम् ।) अज्जउत्त (इत्यर्धोक्ते ।) संसइदे दाणिं परिणए ण एसो समुदाआरो । पोरव, ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

राजा—(कर्णौ पिधाय ।) शान्तं पापम्

---

१. इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । आर्यपुत्र, संशयित इदानीं परिणय नैष समुदाचारः । पौरव, न युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरः प्रत्याख्यातुम् ।

---

कन्यादानात्सन्तोषमत्यधिकं प्राप्तुमर्हस्य मुनेर्विमाननापरं फलं जातमितीष्टार्थापेक्षया विरुद्धस्योत्पत्तिप्रतिपादनलक्षणो विषमालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारस्य ध्वनिः । वंशस्थं वृत्तम् ॥ २० ॥

प्रत्ययप्रतिवचनं विश्वासजनकं प्रतिवचनमुत्तरं अवस्थान्तरं विपरीतावस्थां वैपरीत्यमितियावत् । आर्यपुत्रेति भर्तुरामन्त्रणप्रकारः एषः आर्यपुत्रेति सम्बोधनरूपः आचारः व्यवहारः न युज्यत इत्यन्वयः । अत्र पौरवेतिसम्बोधनं महाकुलप्रसूतस्यतवेदृशमनुष्ठानमनुचितामिति द्योतयितुम् । नयुक्तं नाम । अतीवानुचितमित्यर्थः नामेतिकुत्सायां । स्वभावोत्तानहृदयम् स्वभावेन उत्तानं गाधं परवञ्चनाऽनभिज्ञामित्यर्थः अनेनस्वस्य जानपदमौग्ध्यातिशयात्परात्मजनाविवेकशून्यतयाविश्वासाधिगमेहेतुः । समयपूर्वं "परिग्रहबहुत्वेऽपिद्वेप्रतिष्ठे कुलस्यमे" इत्यादि प्रतिज्ञापूर्वकम् अथवा समयपूर्वं कालनियमपूर्वं त्रिचतुरैरहोभिस्तवानयनायपुरुषं प्रेषयिष्यामीत्यादिशपथेन तथा च वक्ष्यति—"एकैकमत्रदिवसे दिवसे नामाक्षरं गणयगच्छसि यावदन्तम् । तावत्प्रिये मदवरोधगृहप्रवेशं नेताजनस्तवसमीपमुपैष्यतीति" ॥ ईदृशैरक्षरैः "चिन्तयन्नपि नखलु स्वीकरणमत्रभवत्याः स्मरामि" त्यादिभिर्निष्ठुरैरक्षरैः । प्रत्याख्यातुं निराकर्तुम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

शकुन्तला—होदु । जइ परमत्थतो परपरिग्गहसङ्किणा तुए एव्वं वत्तुं पउत्तं ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं ।

राजा—उदारः कल्पः ।

शकुन्तला—(मुद्रास्थानं परामृश्य ।) हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली । (इति सविषादं गौतमीमवेक्षते ।)

---

१. भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

२. हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः ।

---

व्यपदेशमिति व्यपदिश्यत इति व्यपदेशः । अत्र व्यपदेशशब्दः कुलव्यवहारे वर्तते । वक्ष्यति च "कोऽस्यव्यपदेशः" इति । तं परदाराभिमर्शविमुखतया सुप्रसिद्धं कुलं आविलयितुं कलुषीकर्तुं "तत्करोति" इति ण्यन्तात्तुमुन् । तथा इमं जनं अस्मानं माभित्यर्थः । पातयितुं पतितं कर्तुं च किमीहसे किमर्थमिच्छसि । अत्रोपमामाह—कूलङ्कषेवेति । कूलं कषतीति कूलङ्कषा "सर्वकूलाभ्रकरीषेषु कषः" इति खश् "अरुर्द्विषत्" इत्यादिना मुमागमः । तटसङ्घर्षिणी उत्कूलप्रवाहतया मर्यादालङ्घिनीति यावत् । सिन्धुः नदी प्रसन्नमच्छमम्भः आविलयितुं तटतरुं रोधोवृक्षं पातयितुं च यथा प्रवर्तते तद्वत् यथा तटसङ्घर्षिणी नदी प्रसन्नमम्भः कलुषयति तटतरुं च पातयति तथैवमलीकमालपन्ती त्वं मद्वंशप्रसिद्धिमाविलयितुं मां च पातयितुमिच्छसीत्यर्थः । उपमालङ्कारः । आर्या वृत्तम् ॥ २१ ॥

अपनेष्यामि निवारयिष्यामि । उदारः कल्पः मुख्योन्यायः स्त्रैणं स्त्रीसमूहः प्रत्युत्पन्नमति प्रतिभान्वितम् । अपरम् अन्यदभिज्ञानम् । श्रोतव्यमिति अनेन भवतीभिः कुतोऽयमलीकवचनोपन्यासो यदिमयानश्रूयते तदाह तदश्रवणेनापराधीस्याम् । अतः प्रयोजनाभावेऽपिमदपराधप्रमार्जनाय तद्वचनमवश्यं श्रोष्याम्येवेति संवृत्तपदेन प्राधान्येनद्योत्यते ॥ आत्मकार्यनिर्वर्तिनीनां स्वप्रयोजनसम्पादिनीनां स्त्रीणां वाङ्मधुभिः मनोहारिवचनैः अत्र वाङ्मधुभिरित्येकेदशवर्तीरूपकं । तेन स्त्रीपुलतात्वस्य कामुकानां भ्रमरत्वस्यचारोपोगम्यः ॥ विषयिणः इन्द्रियसुखपरायणाः पुमांसः कामिन इति यावत् ।

गौतमी—णूणं दे सक्कादारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं ।

राजा—(सस्मितम् ।) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

शकुन्तला—एत्थ दाव विहिणा दंसिदं पहुणत्तं । अवरं दे कहिस्सं ।

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला—णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणिपत्त-भाअणगअं उअअं तुह हत्थे सण्णिहिदं आसि ।

राजा—शृणुमस्तावत् ।

शकुन्तला—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउ त्ति अणुअम्पिणा उवच्छन्दिदो उअएण । ण उण दे अपरिचिआदो हत्थब्भासं उवगदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदोसि सव्वो सगन्धेसु विस्ससिदि । दुवेवि एत्थ आरण्णआ त्ति ।

राजा—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

---

१. नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

२. अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

३. नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

४. तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वामित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

**गौतमी**—महाभाअ, ण अरुहसि एव्वं मन्तिदुं । तवोवणसंवट्टिदो अणभिण्णो अअं जनो कइदवस्स ।

**राजा**—अयि तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।

---

१. महाभाग, नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य ।

---

**स्त्रीणामिति**। स्त्रीणां स्त्रीजातेः "जात्याख्ययामेकस्मिन्बहुवचनमन्यतरस्या" मिति बहुवचनम् । अशिक्षिताः अनुपदिष्टा अपि पटवयस्तासां भावस्तत्वं "त्वतलो- र्गुणवचनस्य" इति पुंवद्भावः । यद्वा "वोतो गुणवचनात्" इति विहितस्य ङीषो वैकल्पिकत्वाद्रूपं । अशिक्षिताः अपि पटवः अशिक्षितपटवस्तासां भावस्तत्वम् । अत्रपक्षे पुंवद्भावाकरणेन लाघवम् । यद्वा अशिक्षितं पटुत्वं पाटवमिति समासः । अनुपदिष्टकौशलं । स्वभावसिद्धं चतुरत्वमित्यर्थः । अर्थाद्वञ्चने विषये । अमानुषीषु मानुषजातिव्यतिरिक्तासु परप्रतारकवाग्व्यवहारशून्यास्विति यावत् । सन्दृश्यते सम्यग्विभाव्यते सन्दृश्यत इति वर्तमानं लटा नायमर्थः पुराणादिष्वेव प्रसिद्धः । अपित्विदानीमपि सर्वजनानुभवविषयएवेति द्योत्यते । याः प्रतिबोधवत्यः बुद्धिश- क्तिशालिन्यः वागादिव्यवहारकुशला मानुष्य इत्यर्थः । ताः किमुत मानुषीणामनु पदिष्टवञ्चकत्वकौशले किमु वक्तव्यमित्यर्थः । उक्तमर्थमुपपादयति—प्रागिति । पर- भृताः कोकिलस्त्रियः प्रयोजककर्त्र्यः । परभृतशब्दो योगमहिम्ना कोकिले वर्तत इति जातिवाचकत्वाभावाज्जातिलक्षणङीषोऽप्रसक्तिः । अथवा अजादेराकृतिगणत्वेन तत्र पाठाऽभ्युपगमेन टाप् । स्वं स्वकीयमपत्यजातं शावकसमूहं अन्यैः अन्य- जातीयैः द्विजैः पक्षिभिः अर्थात्काकैः प्रयोज्यकर्तृभिः अन्तरिक्षगमनात्प्राक्उड्डीय- गमनात्पूर्वं पोषयन्ति खलु वर्धयन्ति खलु । खलु प्रसिद्धौ । अत्र केचित्परभृतशब्दं पुंलिङ्गं मत्वैवं समादधते । "अपत्यपोषणं कथं पुरुषक्रियेति नाशङ्कनीयम् । पुम्पक्षिणामप्यपत्यवात्सल्यस्य विद्यमानत्वात्" इति । नैतत्समञ्जसम् । नह्यत्र परभृता इत्यनेन पुमांसः कोकिलाः परामृश्यन्ते । येन पुम्पक्षिणामपत्यादिना समाधीयेत । किन्तु परभृता इत्यनेन स्त्रियएव परामृश्यन्ते। अन्यथा स्त्रीणामशि- क्षितपटुत्वमिति वाक्यार्थस्य समर्थनार्थमुपन्यस्तेन वाक्येन पुंसामशिक्षितपटुत्वमित्यु- पन्यस्तं स्यादिति पूर्वोत्तरवाक्यार्थसङ्गतिर्भज्येत । अतो यथाव्याख्यातमेव रमणीयम् ।

प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

शकुन्तला—(सरोषम् ।) अणज्ज, अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि ।

१. अनार्य, आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

तथा । "अत्रामानुषीपरभृतद्विजादिशब्दाः शकुन्तलावृत्तान्तं सूचयन्ति । यथा । अमानुषीशब्देन मेनकोच्यते । परभृतशब्देन शकुन्तला । द्विजशब्देन कण्वः । एवं परपुष्टवद्वर्धितायास्तवानृतभाषणं युक्तमेवेति शब्दशक्त्या सूच्यते" इति व्याचक्षते । तदपि नातीवचतुरम् । अमानुषीशब्देन मेनकाया अवगतावपि मेनकाप्यशिक्षितपटुत्वं किमुत प्रतिबोधवती शकुन्तलेत्यर्थस्य प्रतीत्या मेनकाया अपि दूषणविषयत्वं सम्भाव्यते । तच्चाप्रकृतमसङ्गतञ्च । अपि च पूर्वार्धे अमानुषीशब्देन या प्रतिपादिता तस्या एवोत्तरार्धे परभृता इत्यनेन परामर्शोन्याय्यः । एवञ्च स्वमपत्यजातमित्यनेन शकुन्तलापरामृश्येत । एवञ्च प्रकृतार्थस्यानुपकारो विरोधश्चेति तत्कल्पनं न चतुरम् । किन्तु अमानुषीशब्देन तिर्यग्जातिस्त्रियो गृह्यन्ते । तिर्यगादिष्वेवं किमुत प्रतिबोधवतीष्वित्यर्थः । तेनार्थापत्तिस्सङ्गच्छते । उत्तरार्धे परभृता इत्यनेन शकुन्तला । स्वमपत्यमित्यनेन भरतः । अन्यैर्द्विजैरित्यनेन मारीचाश्रमवासिनो मुनयः । प्रागन्तरिक्षगमनादित्यनेन पुरन्दरप्रेषितमातलिसहकृतस्य दुष्यन्तस्यागमनात्प्रागिति चार्थस्य परिस्फुरणाद्वक्ष्यमाणः मारीचाश्रमे शकुन्तलायाः पुत्रसहिताया मुनिगणरक्ष्यमाणाया अवस्थितिः । इन्द्रलोकात्प्रतिनिवृत्तौ दुष्यन्तस्तस्मिन्नाश्रमे समसृज्यतेति च कथाप्रबन्धः प्रतीयत इति वस्तुना मुद्रालङ्कारस्य ध्वनिः । "स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः । पुरुषाणां तु पाण्डित्यं शास्त्रेणैवोपदिश्यते ॥" इति मृच्छकटिकास्थश्लोकेन समार्थोऽयं श्लोकः । अत्राप्रस्तुतस्त्रीसामान्यवृत्तान्तोपन्यासेन प्रस्तुतशकुन्तलावृत्तान्तः प्रतीयत इत्यप्रस्तुतप्रशंसा । सा च किमुतेत्यर्थापत्त्या उत्तरार्धे विशेषेण सामान्यस्य समर्थनरूपेणार्थान्तरन्यासेन चाङ्गाभ्यां सङ्कीर्यते । वसन्ततिलकं वृत्तम् ॥ २२ ॥

आत्महृदयानुमानेन आत्महृदयज्ञानेन यथा तवमनः परातिसन्धानप्रवणं तथान्येषां मनांस्यपि तर्कयसीत्यर्थः । धर्म कञ्चुकप्रवेशिनः धर्मरूपशरीरावरणपि-

**राजा**—(आत्मगतम् ।) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

(प्रकाशम् ।) भद्रे, प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये ।

**शकुन्तला**—[1]सुट्ठु दाव सच्छन्दचारिणी किदह्मि जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा । (इति पटान्तेन मुखमावृत्य रोदिति ।)

**शार्ङ्गरवः**—इत्थमात्मकृतं चापलमप्रतिहतमात्मानं दहति ।

---

१. सुष्ठु तावत्स्वच्छन्दचारिणी कृतास्मि याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता ।

---

हितशरीरस्य धर्मध्वजिन इत्यर्थः तृणच्छन्नकूपोपमस्य अन्तर्दोषबहुलस्य ॥ सन्दिग्धबुद्धिमिति । इदन्तुरतेरविच्छेदार्थमुक्तम् सन्दिग्धबुद्धिं सन्दिग्धासंशयमारूढा बुद्धिर्यस्यतं । अकैतव इव सत्य इव ।

**मय्येवेति** । विस्मरणेन स्मरणराहित्येन दारुणा अतिनिर्दया परस्त्रीबुद्ध्या तत्सङ्गमानङ्गीकाराच्चातिपुरुषेति यावत् । तथाभूता या चित्तवृत्तिः मनोव्यापारः यस्य तस्मिन् । अत्र विस्मरणज्ञानं शकुन्तलावचनमात्रप्रमाणादित्यनुसन्धेयम् । रहः विजने वृत्तं सम्पन्नं प्रणयं स्नेहं अप्रतिपद्यमाने अनुपलभमाने मयि विषये अतिरुषा उत्कटकोपेन अथवा अतिरुषा अधिककोपयेति शकुन्तलाया एव विशेषणम् ।अधिलोहिते अधिकरक्ते अक्षिणी नेत्रे यस्यास्तया "बहुव्रीहौ सक्थ्यक्ष्णोः" इति समासान्तः षच् । "षिद्गौरादिभ्यश्च" इति षित्वान्ङीष् । अनेन कोपस्याकृत्रिमत्वं व्यज्यते । तथाभूतया अनयेति शेषः । कुटिलयोर्वक्रयोर्भ्रुवोर्भेदात् भङ्गात् स्मरस्य मन्मथस्य शराः अस्यन्तेऽनेनेति शरासनं "करणाधिकरणयो" इति ल्युट् । धनुः भग्नं खण्डितमिव लक्ष्यत इत्युत्प्रेक्षा । पूर्वार्धप्रतिपादितस्यार्थस्योत्तरार्धं प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गश्चेत्यनयोस्संसृष्टिः । वसन्ततिलकं वृत्तम् ॥ २३ ॥

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

राजा—अयि भोः, किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः क्षिणुथ ।

शार्ङ्गरवः—(सासूयम् ।) श्रुतं भवद्भिरधरोत्तरम् ।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।

---

तथापीदमिति । इदं शकुन्तलापरिग्रहणं नलक्षये नपश्यामि न जानामीत्यर्थः । आत्मकृतमित्यादि । चापलंचपलकर्म अन्यहृदयमज्ञात्वातस्मिन्नात्मसमर्पणरूपासमीक्ष्यकारित्वम् । कदाचिदात्मकृतं चापलं दैवानुकूल्येन सम्यक्तयापरिणमति प्रतिहतं दैवविहतञ्चेद्दहति ।

अत इति । अतः एतस्मात्कारणात् । अप्रतिहतचापलस्य दाहकत्वाद्धेतोरित्यर्थः । रहः विजने सङ्गतं प्रणयः विशेषात् विशेषेण परीक्ष्य कर्तव्यम् । कार्यसामान्यस्य परीक्ष्यकर्तव्यत्वे रहःसम्बन्धस्य सविशेषं परीक्ष्य कर्तव्यत्वे किमु वक्तव्यमित्यर्थः । वैपरीत्ये दोषमाह—अज्ञातेति । अज्ञातहृदयेषु अपरिज्ञातचित्तेषु जनेषु विषये सौहृदं मैत्री एवं इत्थं यथाधुना वयमवलोकयामस्तथा वैरीभवति द्वेषे पर्यवस्यति । अतः कर्तव्यं युक्तमयुक्तं वेति पूर्वं सविशेषमालोच्यैव कर्तुमुचितमिति भावः । वैधर्म्येणार्थान्तरन्यासः ॥ २४ ॥

सम्भृतदोषाक्षरैः सम्भृतः आरोपितः दोषो येषु तान्यक्षराणि येषु तैर्वचनैरितिशेषः । क्षिणुथहिंस्थदूषयथेत्यर्थः ॥ अधरोत्तरम् वैपरीत्यम् अथवा अधरं हीनं अपकृष्टमित्यर्थः तथाभूतमुत्तरं प्रतिवचनम् ।

आजन्मन इति । यो जनः आजन्मनः जन्मन आरभ्य । आ जन्मन इति पदद्वयम् । अव्ययीभावेनैकत्वे तु आजन्मेति स्यात् । शाठ्यं परवञ्चनाचातुर्यं अशिक्षितः अरण्यवासित्वात्केनापि वञ्चकेनानुपदिष्टः । शिक्षित इति शिक्षेर्ण्यन्तात्क्तः "प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता" इत्युक्तेः कर्मणि क्तः । शाठ्यमिति कर्मणोऽनभिहितत्वात् द्वितीया । तस्य तादृशस्य जनस्य वचनं वाक्यं अप्रमाणं प्रमाणत्वेनाग्राह्यम् । यैः परेषां अतिसन्धानं विद्येति अधीयते पठ्यते । यथा विद्या सद्गुरोः संप्रदायात्सुदिने मङ्गलपूर्वकं नियतात्मतयाधीयते तथेदमित्यर्थः । तेकिल त एव आप्तवाचः यथार्थवक्तृत्वाद्विश्वासयोग्यवाक्याः सन्तु भवन्तु । अत्र

परातिसंधानमधीयते यै-
विंद्येति ये सन्तु किलाप्तवाचः ॥ २५ ॥

राजा—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवम् । किं पुनरिमामतिसंधाय लभ्यते ।

शार्ङ्गरवः—विनिपातः ।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयम् ।

शारद्वतः—शार्ङ्गरव, किमुत्तरोत्तरेण । अनुष्ठितो गुरोः संदेशः । प्रतिनिवर्तामहे वयम् । (राजानं प्रति ।)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि, गच्छाग्रतः ।

(इति प्रस्थिताः ।)

शकुन्तला—कहं इमिणा किदवेण विप्पलद्ध ह्मि । तुह्मे वि मं परिच्चअह । (इत्यनुप्रतिष्ठते ।)

---

१. कथमनेन कितवेन विप्रलब्धास्मि । यूयमपि मां परित्यजथ ।

---

"तस्याप्रमाणं" सन्तु किलाप्तवाचः" इति वाक्यात्तद्विरुद्धस्यार्थस्य प्रतीतेर्वक्रोक्तिरलङ्कारः । "वक्रोक्तिः श्लेषकाकुभ्यामपरार्थ प्रकल्पन" मिति तल्लक्षणात् ॥ इन्द्रवज्रा वृत्तम् ॥ २५ ॥

सत्यवादिन्निति सोल्लुण्ठवचनम् । अतिसन्धाय वञ्चयित्वा । विनिपातः अधःपतनं प्रत्यवाय इति यावत् ।

तदिति । तत् तस्मात्कारणात् एषा भवतः कान्ता । भवता पूर्वं पत्नीत्वेन परिगृहीतेत्यर्थः । एनां एनामित्यत्र "द्वितीयाटौस्स्वेनः" इत्येनादेशः । तदेषा भवतः कान्तेत्युक्त्वा त्यज वैनामित्यन्वादेशसत्वात् । त्यज वा गृहाण वा । एतदेव समर्थयाते—उपपन्ना हीति । दारेषु कलत्रेषु विषये सर्वतः सर्वासु दिक्षु मुखं यस्याः सा त्यागे ताडने स्वीकारे च स्वातन्त्र्यवती प्रभुता स्वामित्वं उपपन्ना हि युक्ता किल । अत्र शकुन्तलावृत्तान्तरूपस्य विशेषस्य कलत्रसामान्यधर्मोपन्यासेन समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २६ ॥

गौतमी—(स्थित्वा।) वच्छ सङ्गरव, अणुगच्छदि इअं क्खु णकरुणपरिदेविणी सउन्दला। पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिआ करेदु।

शार्ङ्गरवः—(सरोषं निवृत्य।) किं पुरोभागे, स्वातन्त्र्यमवलम्बसे।

(शकुन्तला भीता वेपते।)

शार्ङ्गरवः—शकुन्तले,

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम्॥ २७॥

तिष्ठ। साधयामो वयम्।

राजा—भोस्तपस्विन्, किमत्रभवतीं विप्रलभसे।

---

१. वत्स शार्ङ्गरव, अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु।

---

प्रत्यादेशपरुषे प्रत्यादेशेन प्रत्याख्यानेन परुषे निष्ठुरे पुरो भागे दोषैकदर्शिनि। यदीति। क्षितिपः राजा। अनेन सर्वनियन्ता नृपश्चेदेवं करोति नास्माकमस्मिन्विषये किञ्चित्कर्तुं प्रवृत्तिः शक्येति भावः। यथा वदति नेयं मया परिणीतपूर्वेति तथा त्वमसि यदि त्वं तस्य भार्या न भवसि चेत् उत्कुलया उत्क्रान्तकुलमर्यादया। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। त्वया पितुः काश्यपस्य किं प्रयोजनम्। नासावितः परमीदृशीं त्वां पुनर्गृहीष्यतीति भावः। अथ तु अनन्तरन्तु। तुः पूर्वोक्तवैलक्षण्ये। आत्मनः शुचि निष्कलङ्कं व्रतं चरितं वेत्सि यदि जानासि चेत् पतिकुले भर्तृगृहे दास्यमपि दासीकर्मापि क्षमं उचितम्। दास्यमिति "गुणवचन" इति कर्मणि ष्यञ्प्रत्ययः। सर्वथा प्रतिव्रतायाः पतिगृहावस्थानमेवोचितमिति भावः। द्रुतविलम्बितं वृत्तम्॥ २७॥

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

शार्ङ्गरवः—यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ।

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

पुरोहितः—(विचार्य ।) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरादिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, ततः प्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये पितुरस्याः समीपगमनमवस्थितमेव ।

---

कुमुदानीति । शशः अङ्कः लाञ्छनं यस्य स शशाङ्कश्चन्द्रः कुमुदान्येव कैरवाण्येव । एकसरस्थितान्यपि न पद्मानीत्येवकारार्थः । बोधयति विकासयति । सविता सूर्यः पङ्कजान्येव कमलान्येव न कुमुदानि बोधयति उन्मीलयति । एवं वशिनां जितेन्द्रियाणां वृत्तिः प्रवृत्तिः परेषां परिग्रहाणां पत्नीनां संश्लेषेषु आलिङ्गनेषु पराङ्मुखी विमुखी भवतीति शेषः । पूर्वार्धे वैधर्म्येण दृष्टान्तालङ्कारः । उत्तरार्धेऽन्तरन्यासोऽलङ्कारः ॥ २८ ॥

मूढ इति । अहं मूढः विस्मृतपूर्वपरिणयवृत्तान्तत्वेन हतधीः । एषा शकुन्तला वा मिथ्या अनृतं वदेत् भाषेत इति संशये सन्देहे जाते सति प्रथमपक्षे दारत्यागी धर्मपत्नीत्यागी भवामि । आहो पक्षान्तरे परस्त्रियाः परकलत्रस्य स्पर्शेन अभिमर्शेन पांसुलः पातकी भवामीति शेषः । परकलत्रसङ्गमपापात्पत्नीत्यागो वरमिति भावः ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से अनुगच्छ माम् ।

शकुन्तला—भअवदि वसुहे देहि मे विवरं (इति रुदती निष्क्रान्ता सह पुरोधसा तपस्विजनैश्च ।)

राजा—(शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति ।)

नेपथ्ये ।

आश्चर्यमाश्चर्यम् ।

राजा—(आकर्ण्य ।) किं नु खलु स्यात् ।

पुरोहितः—(सविस्मयम् ।) देव असतं खलु संवृत्तम् ।

राजा—किमिव ।

पुरोहितः—देव परावृत्तेषु कण्वशिष्येषु ।

सा निन्दन्ती स्वानि भाग्यानि वाला
वाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—किं च ।

---

५; भगवति वसुधे, देहि मे विवरम् ।

---

पूर्ववृत्तमपूर्वचरितम् शकुन्तलापरिग्रहमित्यर्थः अन्यसङ्गात् अन्यस्य स्त्रीजनस्य अवरोधस्येति यावत् सङ्गात् समागमात् अथवा अन्यस्याः लोकोत्तरायाः राजलक्ष्म्याः सङ्गात् व्यासङ्गात् राजकार्यकान्तचित्तत्वात् सर्वनाम्नो वृत्तिमात्रेपुंवद्भावः अथ चान्यस्याकस्मादापतितस्य शापस्य सङ्गस्सम्बन्धस्तस्मादिति कवेर्गूढाशयः ।

सेति॥सा वालत्वाद्वाहूत्क्षेपं क्रन्दितुं प्रवृत्तेति वालास्वभावोक्तिः । स्वानि स्वकीयानि भाग्यानि भागधेयानि निन्दन्ती सती वाहू उत्क्षिप्य वाहूत्क्षेपं "स्वाङ्गेऽध्रुवे" इति णमुल्प्रत्ययः । क्रन्दितुं रोदितुं च प्रवृत्ता आरब्धवती । तीर्यन्ते पापान्यनेनेति तीर्थं "पातृतुदि" इति थुक् । अप्सरसा सेवितं तीर्थमप्सरस्तीर्थं इदं च हस्तिनापुरनेदिष्ठस्य गङ्गाया जलावतारस्य नाम । अत्र स्नानार्थमागतानां साधूनां निष्प्रत्यूहस्नानप्रत्यवेक्षणार्थं शक्राज्ञया प्रतिदिनमेका अप्सराः सन्निहिता भवतीति पौराणिकी कथा । अप्सरस्तीर्थमभिव्याप्य आप्सरस्तीर्थं अभिविधिवाचकेनाङा सहाव्ययीभावः अप्सरस्तीर्थमभिव्याप्य आरात्समीपदेशे । यद्वा मर्यादावाचकेनाङाव्ययी-

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-

दाक्षिप्यैनां ज्योतिरेकं तिरोऽभूत् ॥ ३० ॥

(सर्वे विस्मयं रूपयन्ति ।)

राजा—भगवन् प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव किं वृथा तर्केणाकृप्यते । विश्राम्यतु भवान् ।

पुरोहितः—(विलोक्य ।) विजयस्व (इति निष्क्रान्तः ।)

राजा—वेत्रवति पर्याकुलोऽस्मि शयनभूमिमार्गमादेशय ।

प्रतीहारी—ईदो इदो देवो । (परिक्रामति ।)

---

१, इत इतो देवः ।

---

भावः । केचित्तु अप्सरस्स्तीर्थमिति पदं विभज्य व्याचक्षते । तदसङ्गतम् । तथा पदविभागे तु आराच्छब्दयोगे "अन्यारात्" इति पञ्चमीविधानेन अप्सरस्तीर्थादारादिति भाव्यम् । आरात्पदसमभिव्याहारेण द्वितीयेतितु नैव शंक्यम् तादृशस्यानुशासनस्य काप्यनुपलम्भात् । स्त्रिया इव योषित्त इव संस्थानं अवयवविन्यासः । आकृतिरित्यर्थः । यस्य तत् । अनेन स्त्रयाकारयैव देवतया नीतेति परपुरुषासंस्पृष्टत्वं ध्वन्यते । तादृशं ज्योतिः तेजोमयः पदार्थः । अनेन ज्योतीरूपतया दुर्निरीक्ष्यत्वाल्ललनाकृतिमात्रपरिज्ञानम् न तु विशेषपरिज्ञानमिति ध्वन्यते । एनां उत्क्षिप्य भूतवद्गृहीत्वा जगाम । अप्सरस्तीर्थाभिमुखं ययौ तिरोऽभूदिति पाठे अन्तर्दध इत्यर्थः ॥ ३० ॥

राजा—(आत्मगतम् ।)

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
वलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३१ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति श्रीमहाकविकालिदासकृताभिज्ञानशाकुन्तले पञ्चमोऽङ्कः ।**

---

काममिति ॥ प्रत्यादिष्टां तिरस्कृतां "प्रत्यादेशोनिराकृतां । अतएव मुनेः कण्वस्य तनयां दुहितरं शकुन्तलां परिगृह्यत इति परिग्रहः भार्या "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः । तां कामं अत्यन्तं न स्मरामि । इयं शकुन्तला मया परिणीतेति मम स्मरणमेव न सञ्जायतइत्यर्थः । अतो निराकरणं युक्तमेवेतिभावः किंतु तथास्मरणाभावेऽपि वलवत् अत्यन्तं दूयमानं अन्तः परितप्यमानं हृदयं मनः मां तथाविस्मृतिरहितमित्यर्थः । प्रत्याययतीव निश्चाययतीव वर्त्ततइति शेषः । शकुन्तलायाः परिणयो मया नूनं नकृतश्चेदिदानीं प्रत्यादेशे मम हृदयं कथं परितप्येतेति भावः ॥ ३१ ॥

**इति श्रीदुग्धापगादक्षिणतीरस्थितविरिञ्चिपुराभिजन-
श्रीरामसुग्रीवरतनूभवशङ्करविरचिताया-
मभिज्ञानशाकुन्तलव्याख्यायां विद्व-
न्मनोरमाख्यायां पञ्चमोऽङ्कः ।**

---

## षष्ठोऽङ्कः ।

(ततः प्रविशति नागरिकः स्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( ताडयित्वा । ) [1]अले कुम्भिलआ, कहेहि कहं तुए एशे मणिवन्धणोक्किण्णणामहेए लाअकीए अङ्गुलीए शमाशादिदे ।

**पुरुषः**—( भीतिनाटितकेन । ) [2]पेशीदन्ते भावमिश्शे । हगे ण ईदिशकम्मकाळी ।

**प्रथमः**—[3]किं शोहणे वह्मणेत्ति कळिअ रण्णा पडिग्गहे दिण्णे ।

---

१. अरे कुम्भीलक, कथय कुत्र त्वया एतन्मणिबन्धनोत्कीर्णनामधेयकं राजकीयमङ्गुलीयकं समासादितम् ।

२. प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

३. किं शोभनो ब्राह्मणइति कलयित्वा राज्ञा प्रतिग्रहोदत्तः ।

---

अथेदानीं कविः वृत्तवर्तिष्यमाणकथाप्रदर्शकरूपार्थोपक्षेपकेण प्रस्तुतकथां सूचयिष्यन्नाह—तत इति ॥ नागरिकः नगररक्षाधिकृतः स्यालः राजस्यालः । कोष्ठपाल इति यावत् । अरे इति हीनसंबोधनार्थकमव्ययं "हीनसंबोधने त्वरे" इत्यमरः । कुम्भीलकः चोरः । "कुम्भीलको गण्डपदस्तस्करश्च मलिम्लुचः" इति नाममाला । "मागधी राक्षसादेः स्यात्" इति भरतोक्तौ आदिशब्देन शकारधीवरादीनां ग्रहणादत्रैषां मागध्युक्तिः । "तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक्" इति दर्पणकारोऽपि । मणेः रत्नस्य यत् बन्धनं सुवर्णसङ्घटनं तत्र उत्कीर्णं रेखाविन्यासेन व्यक्तीकृतं नामधेयं यस्मिंस्तत् तादृशं । राजकीयं राजसम्बन्धि, "राज्ञः कच" इति सूत्रेण राजन् शब्दात् छप्रत्ययसन्नियोगशिष्टे कादेशे रूपमिदम् ॥ अङ्गुलौ भवं अङ्गुलीयं "जिह्वामूलाङ्गुलेः छः" इति सूत्रेणाङ्गुलिशब्दात् भवार्थे छप्रत्यये तस्य इयादेशे रूपमिदं । अङ्गुलीयमेव अङ्गुलीयकं स्वार्थे कः ऊर्मिकेत्यर्थः । समासादितं लब्धं । भावमिश्राः पूज्याः भवन्तः इत्यर्थः । "मान्यो भावस्तु वक्तव्यः" इत्युक्तेः । भावेति संबोधनं । असौ नीचस्सुतरां ग्रामीण इति तेन मिश्रपदं गौरवार्थमुक्तं । शोभनः कुलशीलादिना समीचीनः

पुरुषः—[१]सुणुधदाणिं । हगे शक्कावदाळब्भन्तलवाशी धीवळे ।

द्वितीयः—[२]पाडच्चला, किं अम्मेहिं जादी पुच्छिदा ।

स्यालः—[३]सूअअ कहेदु शव्वं अणुक्कमेण मा णं अन्तरा पडिबन्धह ।

उभौ—[४]जं आवुत्ते आणवेदि कहेहि ।

पुरुषः—[५]अहके जालुग्गलादीहिं मच्चबन्धणोवाएहिं कुडुंबभलणं कलेमि ।

स्यालः—(विहस्य ।) [६]विसुद्धो दाणिं आजीवो ।

पुरुषः—[७]शहजे क्लिल जे विणिन्दिए णहु दे कम्मविवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदु एव्व शोत्तिए ॥

---

१. श्रृणुतेदानीं । अहं शक्रावताराभ्यन्तरवासी धीवरः ।
२. पाटच्चर, किमस्माभिर्जातिस्ते पृष्टा ।
३. सूचक कथयतु सर्वं अनुक्रमेण, मैनमन्तरे प्रतिबन्धय ।
४. यदावुत्त आज्ञापयति कथय ।
५. अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।
६. विशुद्धः इदानीं आजीवः ।
७. सहजं किल यद्विनिन्दितं न खलु तत् कर्म विवर्जनीयं ।
पशुमारणकर्मदारुणः अनुकम्पामृदुरेव श्रोत्रियः ॥

---

प्रतिग्रहः दक्षिणा, शक्रावतार इति तीर्थनाम; तत्संबन्धात्सन्निहितग्रामस्यापि तदेक नाम; तदभ्यन्तरवासी तन्मध्यवास्तव्यः, धीवरः जालिकः । पाटच्चरः चोरः ॥

**सूचकेत्यादि** ॥ सूचक इति रक्षिणोरेकतरस्य नाम अनुक्रमेण क्रममनतिक्रम्य आनुपूर्व्येणेत्यर्थः । अव्ययीभावसमासः । "तृतीयासप्तम्योर्बहुलं" इत्यत्र बहुलग्रहणात् तृतीयाया अमभावः । एनं पाटच्चरं, अन्तरे मध्ये, मा प्रतिबन्धय मा हिंसीः । आवुत्तः "भगिनीपतिरावुत्तः" इत्यमरः । जालस्य आनायस्य, उद्गालः प्रसारणं, आजीवः जीविका । विशुद्धः मेध्यः इति सोपहासं वचनम् ॥

**सहजमिति** ॥ विनिन्दितं लोकगर्हितमपि, यत्, सहज जन्मसिद्धं कुलधर्मत्वेनावश्यमनुष्ठेयतया यज्जन्मतः प्राप्तमित्यर्थः । तत् तादृशं, कर्म, न विवर्ज-

स्यालः—तदो तदो ।

पुरुषः—ऐक्कस्सिं दिअशे खण्डशो लोहिअमच्चे मए कप्पिदे जाव । तश्श उदलब्भन्तले एदं लदणभाशुलं अङ्गुलीअअं देक्खिअ पच्छा अहके शे विक्कआअ दंशअंते गहिदे भावमिश्शेहिं मालेह वा मुंचेह वा अअं शे आअमवुन्तन्दे ।

---

१. ततस्ततः ।

२. एकस्मिन् दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत् । तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत चा अयमस्यागमवृत्तान्तः ।

---

नीयं खलु न परित्याज्यं । खलुरत्रानुनये "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः । अत्र धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते सामान्यमुक्तमित्यप्रस्तुत प्रशंसा । अत्र दृष्टान्तमाह—पशुमारणेत्यादिना ॥ अनुकम्पया दयया, परदुःखदुःखित्वरूपेण परदुःखासहिष्णुत्वरूपेण वा कारुण्येनेत्यर्थः। मृदुःअक्रूरस्वभावः । श्रोत्रियः साङ्गवेदाध्यायी विप्रः "श्रोत्रियञ्छन्दोऽधीते" इति घन् प्रत्ययान्तनिपातोऽयम् । अत्र श्रोत्रियपदं स्वयं अधीतसमग्रवेदवाक्यान्तः पाति "न हिंस्यात् सार्वभूतानि" इत्यादि हिंसासामान्यनिषेधकविधिवाक्यार्थावगमतदनुष्ठानप्रावण्यादिना सर्वभूतसौहार्दाभिप्रायगर्भं । पशोः यज्ञपशोः, मारणकर्मणि हिंसायां विषये, दारुण एव क्रूरएव अस्तीति शेषः । "अस्तिर्भवन्ति परोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्यवचनादस्तीत्यध्याहार्यम् । किलेति वार्तायां । यथा श्रोत्रियः बौद्धादिभिर्विनिन्दितमपि पशुमारणकर्म याज्ञे कर्मणि "अग्नीषोमीयं पशुमालभेत" इत्यादिविशेषविधिबलात् अवश्यकर्तव्यतया अनुतिष्ठन्ति न परिहरन्ति तथा वयमपीति भावः ! श्लोकगतस्य एव्व शब्दस्य इवार्थकत्वे उपमा ॥

ततस्तत इति ॥ रोहित इति मत्स्यस्य संज्ञा । अभ्यन्तरे मध्ये । भासुरं दीप्तं, भावमिश्रैः भवद्भिः, मारयत वा मां घातयत वा । मुञ्चत वा परित्यजत वा । अस्य अङ्गुलीयस्य, आगमवृत्तान्तः आगमनप्रकार इत्यर्थः ॥ जानुकेति द्वि-

**स्यालः**—जाणुअ, विस्सगन्धी गोहादी मच्छबन्धो एव्व णिस्सं-सअं । अङ्गुळीअअदंसणं शे विमरिसिदव्वं । राअउलं एव्व गच्छामो ।

**रक्षिणौ**—तह, गच्छ अले गन्धिभेदअ ।

( सर्वे परिक्रामन्ति । )

**स्यालः**—सूअअ इमं गोउरदुआरे अप्पमत्ता पडिवाळह । जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडि-च्छिअ णिक्कमामि ।

**उभौ**—पविशदु आवुत्ते शामिप्पशादश्श ।

( इति निष्क्रान्तः स्यालः । )

---

१. जानुक विस्रगन्धी गोधादी, मत्स्यबन्ध एव निस्संशयं । अङ्गुलीयकदर्शन-मस्य विमर्शयितव्यं । राजकुलमेव गच्छामः ।

२. तथा, गच्छ अरे ग्रन्थिभेदक ।

३, सूचक इमं गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं । यावदिदमङ्गुलीयकं यथाग-मनं भर्तुर्निवेद्य ततश्शासनं प्रतीक्ष्य निष्क्रामामि ।

४. प्रविशत्वावुत्तस्स्वामिप्रसादाय ।

---

तीयपुरुषस्य नाम ॥ विस्रगन्धः अस्यास्तीति विस्रगन्धी । "विस्रं स्यादामगन्धि यत्" इत्यमरः । गोधां अत्ति भक्षयतीति गोधादी, अयं, मत्स्यबन्ध एव मत्स्य घातुक एव । निस्संशयं सन्देहो नास्ति अर्थाभावे अव्ययीभावः । विमर्शयितव्यं परामर्शनीयं, राजकुलं राजगृहं ! ग्रन्थेः सौवर्णराजतादिनाणकाधिष्ठितान्यदीय-वस्त्रग्रन्थेः, भेदकविस्रंसक । इदमपि चोरं प्रति सोपहासं वचनम् ॥

**सूचकेत्यादि** ॥ अप्रमत्तौ सावधानौ । प्रतिपालयतं रक्षतं । आगमनं अनतिक्रम्य यथागमनं अव्ययीभावसमासः। येन प्रकारेणेदमङ्गुलीयकमागतं तत्प्र-कारमित्यर्थः । भर्तुः महाराजस्य चतुर्थ्यर्थे षष्ठी । निवेद्य विज्ञाप्य । शासनं आज्ञां प्रतीक्ष्य प्रतिपाल्य, यावन्निष्क्रामामि निष्क्रमिष्यामि "यावत्पुरानिपातयोर्लट्" इत्यनेन यावतायोगे भविष्यति लट् । "क्रमः परस्मैपदेषु" इत्यनेन परस्मैपद-परे शिति क्रमेर्दीर्घः । यद्वा यावत् निष्क्रामामि तावत् अप्रमत्तौ प्रतिपालयतं इत्य

प्रथमः—[1]जाणुअ चिळाअदि क्खु आवुत्ते ।

द्वितीयः—[2]णं अवशलोपशप्पणीआ लाआणो ।

प्रथमः—[3]जाणुअ फुल्लन्ति मे हत्था इमश्श वज्झश्श शुमणा पिणद्धुम् ।

( इति पुरुषं निर्दिशति । )

पुरुषः—[4]णं अलुहदि भावे अकालणमालणं भाविदुं ।

द्वितीयः—( विलोक्य । ) [5]एशे अह्माणं शामी पत्थहस्थे लाअशाशणं पडिच्छिअ इदोमुहे देक्खीअदि । गिद्धबली भविश्शाशि शुणो मुहं वा देक्खिश्शाशि ।

---

१. जानुक चिरायते खल्वावुत्तः ।

२. ननु अवसरोपसर्पणीया राजानः ।

३. जानुक स्फुरतो मम हस्तौ अस्य वधार्थं सुमनसः पिनद्धुम् ।

४. नार्हति भावोऽकारणमारणं भावयितुं ।

५. एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्य इतोमुखो दृश्यते । गृद्धबलिर्भविष्यसि । शुनो मुखं वा द्रक्ष्यसि ।

---

न्त्रयस्पुशकः । अस्यां योजनायां यावच्छब्दो ऽवध्यर्थकः ॥ स्वामिनः राज्ञः, प्रसादाय प्रीतिपूर्वकनियोगाधिगमायेत्यर्थः । निष्क्रान्तः "गत्यर्थाकर्मके" त्यादिना कर्तरि क्तः । "यस्य विभाषा" इत्यनेन निष्ठायां नेट् "अनुनासिकस्य क्वि" इत्यादिना उपधा दीर्घश्च । चिरायते विलम्बते अपपाठोऽयः चिरयति इति साधुः। चिरं करोति चिरयति "पचाद्यचि" स एव चिरः, स इव आचरति चिरायते "कर्तुः क्यङ् सलोपश्च" इत्यनेन क्यङ्" । अवसरे उचितसमये, उपसर्पितुं सन्निधातुं योग्याः उपसर्पणीयाः । सुमनसः पुष्पाणि वध्यचिह्नमालिकां इत्यर्थः । पिनद्धुं बद्धुं "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ।" इत्यनेनापेराद्यक्षरलोपः । निर्दिशति तर्जन्या पुरुषं लक्ष्यीकरोतीत्यर्थः ॥

नार्हतिइत्यादि ॥ भावशब्दः पूज्यवाचकः । न विद्यते कारणं निमित्तं यस्मिंस्तत् अकारण तादृशं मारणं वधं, भावयितुं आपादयितुं इतोमुखः अस-

( प्रविश्य। )

स्यालः सूअअ मुंचेदु एसो जालोवजीवी। उववण्णो खु अ-ङ्गुलीअअस्स आअमो।

सूचकः—जह आवुत्ते भणादि।

द्वितीयः ऐशे जमशदणं पविशिअ पडिणिउत्ते।

( इति पुरुषं परिमुक्तबन्धनं करोति। )

पुरुषः—( स्यालं प्रणम्य। ) भट्टा अद कीलिशे मे आजीवे।

स्यालः—ऐत्तो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दा-विदो।

( इति पुरुषाय स्वं प्रयच्छति। )

पुरुषः—( सप्रणामं प्रतिगृह्य। ) भट्टा अणुग्गाहिदह्मि।

---

१. सूचक, मुच्यतामेष जालोपजीवी। उपपन्नः खल्वङ्गुळीयस्यागमः।
२. यथा आवुत्तः भणति।
३. एषः यमसदनं प्रविश्य प्रतिनिवृत्तः।
४. भर्तः अथ कीदृशः मे आजीवः।
५. एष भर्त्राङ्गुळीयकमूल्यसम्मितः प्रसादोऽपि दापितः।
६. भर्तः अनुगृहीतोऽस्मि।

---

दभिमुख इत्यर्थः। बलिः उपहारः भक्ष्य इति यावत्। जालोपजीवी धीवरः। आगमः आगमनप्रकारः, उपपन्नः युक्तः। आजीवः जीविका "आजीवो जीविका वार्ता" इत्यमरः। कीदृशः कथंभूतः। "इदं किमोरीश् की" इत्यनेन किमः की इत्यादेशः। मत्प्राणरक्षणशिक्षणयोर्भवदधीनत्वात् कथं वा मद्विषये भवतानिर्णयोऽध्यधायीति प्रश्नाभिप्रायः। मूल्यं अर्घः, तेन सम्मितः तुलितः, प्रसादोऽपि पारितोषिकमपि, दापितः ददातेर्ण्यन्तान्निष्ठायां रूपं। स्वं धनं, प्रयच्छति ददाति, "पाघ्रे" त्यादिना दाणो यच्छादेशः॥

**सूचकः**—ऐशे णाम अणुग्गहे, जे शूलादो अवदालिअ हत्थि-क्खन्धे पडिट्ठाविदे ।

**जानुकः**—आवुत्त, पालितोशं कहेहि । तेण अङ्गुलीअएण भट्टि-णो शम्मदेण होदव्वं ।

**स्यालः**—णँ तस्सिं महारुहं रदणं भट्टिणो बहुमदंति तक्केमि, तस्स दंसणेण भट्टिणो अभिमदो जणो सुमराविदो । मुहुत्तअं पकिदि-गम्भीरोवि पज्जुस्सुअणअणो आसी ।

**सूचकः**—शेविदं णाम आवुत्तेण ।

**जानुकः**—णं भणाहि इमश्शकए मच्छशत्तुणोत्ति ।

( इति पुरुषमसूयया पश्यति । )

---

१. एष नामानुग्रहः, यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

२. आवुत्तपारितोषिकं कथयति, तेनाङ्गुलीयकेन भर्तुः सम्मतेन भवितव्यम् ।

३. न तस्मिन् महार्हं रत्नं भर्तुर्बहुमतं इति तर्कयामि । तस्य दर्शनेन भर्तु-रभिमतो जनस्स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् । Self-contro

४. सेवितं नाम आवुत्तेन ।

५. ननु भण अस्य कृते मत्स्यशत्रोरिति ।

---

एष इत्यादि ॥ नाम प्राकाश्ये उपगमे वा । यत् यस्मात् शूलात् मारण-साधनशूलायुधाग्रात् , अवतार्य अवरोप्य, हस्तिनः गजस्य स्कन्धे, असदेशे, प्रति ष्ठापितः स्थितिं प्रापितः । तत् तस्मात् एष नाम अनुग्रहः । कथयति सूचयति । सम्मतेन अभीष्टेन । महार्हं श्रेष्ठं, स्मारितः स्मृतिपथं प्रापितः । प्रकृत्या निसर्गेण गम्भीरोऽपि अगाधमनस्कोऽपि, मुहूर्तं घटिकाद्वयं "अत्यन्तसंयोगे द्वितीया" पर्युत्सुकनयनः विश्लिष्टेष्टजनविषयकानुतापसूचकाश्रुप्रवाहपरिपूरितनयनयुगः इत्यर्थः। पर्यश्रुनयनः इति पाठस्तु समीचीनः । सेवितं (भावे क्तः ) महान् प्रयासः भव-ता स्वीकृत इत्यर्थः । मत्स्यशत्रोः कृते धीवरार्थे । कृते इत्यव्ययं "अर्थे कृते च

पुरुषः—भट्टालक, इदो अद्धं तुह्माणं शुमणो मुल्लं होदु ।

जानुकः—एत्तके जुज्जइ ।

स्यालः—धीवर, महत्तरो तुमं पिअवअस्सो दाणिं मे संवुत्तो । कादंबरीसक्खिअं अह्माणं पढमसोहिदं इच्छीअदि । ता सोण्डिआपणं एव्व गच्छामो ।

( इति निष्क्रान्तास्सर्वे । )

॥ प्रवेशकः ॥

( ततः प्रविशत्याकाशयानेन सानुमती नाम अप्सराः । )

सानु—णिव्वट्टिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थस-

---

१. भट्टारक इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

२. एतावद्युज्यते ।

३. धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तच्छौण्डिकापणमेव गच्छामः ।

४. निर्वर्तितम्मया पर्यायनिर्वर्तनीयं अप्सरस्तीर्थसान्निध्यं साधुजनस्य अभिषे-

---

शब्दो द्वौ तादर्थ्येऽव्ययसंज्ञकौ " इति वचनात् । अर्धं समांशः " पुंस्यर्धोऽर्धं समेंऽशके " इत्यमरः । सुमनोमूल्यं पुष्पक्रयधनार्थं भवतु इत्यर्थः । कादम्बरी सुरा, तत्साक्षिकं तदभिमुखमित्यर्थः । नीचास्तावत् प्राथमिकसौहार्दसम्पादनसमये क्रियमाणसौहार्ददार्ढ्यसम्पादनाय शौण्डिकापणमास्थाय सुरया चषकमङ्कं परिपूर्य अन्योन्यं पीतोच्छिष्टं पर्यायेण पिबन्तीति लौकिकी प्रसिद्धिः । शौण्डिकः मण्डहारकः " शौण्डिको मण्डहारकः " इत्यमरः ॥ प्रवेशकलक्षणन्तु " प्रवेशकोऽनुदात्तोक्तया नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा " इति साहित्यदर्पणे । अनुदात्तोक्तया प्राकृतभाषयेत्यर्थः ॥

निर्वर्तितमित्यादि ॥ निर्वर्तितुं निर्वोढुं योग्यं निर्वर्तनीयं । पर्यायेण परिवृत्त्या निर्वर्तनीयं प+यं । अप्सरस्तीर्थस्य तन्नाम्नः तीर्थविशेषस्य सान्निध्यं समी-

ण्णिज्झं साहुजणस्स अभिसेअकालोत्थि । संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं । मेणआसंबन्धेण सरीरभूदा मे सउन्दला । ताएं अ दुहिदुणिमित्तं आदिट्ठपुव्वह्मि । (समन्तादवलोक्य ।) किं णु क्खु उदुच्छवेवि णिरुच्छवारम्भं विअ राअउलं दीसइ । अत्थि मे विहवो पणिधाणेण सव्वं परिण्हादुं । किंदु सहीए आदरो मए माणइदव्वो । होदु इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी भविअ उवळहिस्सं ।

(इति नाट्येनावतीर्य स्थिता ।)

---

वकाल इति । सांप्रतं अस्य राजर्षेः उदन्तं प्रत्यक्षीकरिष्यामि । मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृनिमित्तं आदिष्टपूर्वाऽस्मि । किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुं । किन्तु सख्या आदरो मया मानयितव्यः । भवतु अनयोरेवोद्यानपालिकयोः तिरस्करणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा उपलप्स्ये ।

---

पावस्थानं, निर्वर्तितं निर्व्यूढं अनुष्ठितमिति यावत् । राजा चासौ ऋषिश्च राजर्षिः यद्वा राजा ऋषिरिव राजर्षिः तस्य दुष्यन्तस्येत्यर्थः । उदन्तस्यावृत्तान्तं, अप्रत्यक्षं प्रत्यक्षं संपद्यमानं करिष्यामि प्रत्यक्षी करिष्यामि साक्षात् निध्यास्यामीत्यर्थः। "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" इत्यनेन च्विः । "अस्य च्वौ" इत्यनेन ईत्वं । शकुन्तैः पक्षिभिः, लालितेति शकुन्तला, पूर्वं आदिष्टा आदिष्टपूर्वा, पूर्वं आज्ञप्तेत्यर्थः । किं न्विति वितर्के । ऋतूत्सवेऽपि ऋतुकालिकोत्सवाचरणसमयेऽपीत्यर्थः । राजकुलं राजगृहं निर्गतः नष्टः, उत्सवारम्भः यस्मिंस्तत् तादृशं । दृश्यते आलोक्यते । प्रणिधानेन ध्यानेन । सख्याः मेनकायाः, आदरः अवश्यं त्वया राजकुलवृत्तान्तः साक्षात् परिज्ञातव्यः इति प्रीतिपूर्वं मद्विधेयीकृतः नियोगः इत्यर्थः । मानयितव्यः गौरवयितव्यः अवश्यानुष्ठानेन साफल्यं प्रापणीय इत्यर्थः तिरस्करिणी अन्यदृष्ट्यगोचरत्वापादिका विद्या, तया, छन्ना तिरोहिता, पार्श्ववर्तिनी समीपदेशवर्तिनी, भूत्वा, उपलप्स्ये ज्ञास्ये । उपोपसृष्टाल्लभेर्लृट रूपम् ॥

(ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ।)

प्रथमा—

आतम्महरिअपण्डुर जीविद सच्चं वसन्दमासस्स ।
दिट्ठोसि चूदकोरअ उदुमङ्गल तुमं पसाएमि ॥
चूअं हरिरिअपिअअं जीविदसरिसं वसन्दमासस्स ।
सच्चलणचळणभग्गं उदुमंगलं विअ पेक्खामि ॥

द्वितीया—परहुदिए किं एआइणी मन्तेसि ।

---

१. आताम्रहरितपाण्डुर जीवित सत्यं वसन्तमासयोः ।
दृष्टोसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि ॥
२. चूतं हर्षितपिककं जीवितसदृशं वसन्तमासस्य ।
षट्चरणचरणभग्नं ऋतुमङ्गलमिव पश्यामि ॥
३. परभृतिके किं एकाकिनी मन्त्रयसे ।

---

तत इत्यादि ॥ चूताङ्कुरं सहकारकोरकं, पृष्ठतः पश्चाद्देशे ॥

आताम्रेति ॥ हे चूतकोरक रसालकलिके, "आम्रश्चूतो रसालोऽसौ" "कलिका कोरकोऽस्त्रियां" इति चामरः । दृष्टोऽसि त्वां भवन्तं, प्रसादयामि सभाजयामि, प्रशंसाविषयीकरोमीति योजना । तमेव चूतकोरकं विशेषयति आताम्रेत्यादिना । आ समन्तात् ईषद्वा "आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे" इत्यमरः । ताम्रः रक्तः हरितः पालाशवर्णयुक्तः, पाण्डुरः अवदातश्चेति कर्मधारयसमासः । तादृश, अनेन प्राथमिकसंबोधनेन चूताङ्कुरस्वभाववर्णनात् स्वभावोक्तिः । सत्यमिति शपथे । "सत्यं च शपथे तथ्ये" इति विश्वः । वसन्तमासयोः मधुमाधवमासयोः, जीवित जीवितवत् प्राधान्येन आश्रयणीय, धारक इति वार्थः । अत्र चूताङ्कुरे मधुमाससम्बन्धित्वविशिष्टजीवितत्वारोपात् अभेदरूपकं । सत्स्वप्यन्येषु प्रसूनेषु ऋतोरुच्छ्वसितमिव त्वमेव त्वमेव प्रधानः इत्यर्थः । ऋतुमङ्गलेत्यपि रूपकं, ऋतोः वसन्तर्तोः, मङ्गल अभ्युदयकर, मुखतस्त्वदभिव्यक्त्यैव ऋतोः स्थेयसीप्रतिष्ठेति भावः । कार्यकारणयोः अभेदप्रतिपादनात् "हेत्वलङ्कारः" "हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते" इति लक्षणात् ॥

परभृतिके इत्यादि ॥ एकाकिनी असहाया "एकादाकिनिचासहाये" इत्यनेन आकिनच् । मन्त्रयसे भाषसे । उन्मत्ता चित्तविभ्रमवती "उन्मादश्चित्त-

प्रथमा—[1]महुअरिए, चूअकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।

द्वितीया—(सहर्षं त्वरयोपसृत्य।) [2]कहं उवट्ठिदो महुमासो ।

प्रथमा—[3]महुअरिए, तव दाणिं काळो एसो मदविब्भमगीदाणं ।

द्वितीया—[4]सहि अवळंब मं जाव अग्गपादट्ठिदा भविअ चूदकलिअं गेण्हिअकामदेवच्चणं करेमि ।

प्रथमा—[5]जइ मम विक्खु अद्धं अच्चणफलस्स ।

द्वितीया—[6]अकहिदेवि एदं संपज्जइ जदो एक्कं एव्व णो जीविदं दुधाट्ठिदं सरीरं ।

---

१. मधुकारिके, चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति ।

२. कथमुपस्थितो मधुमासः ।

३. मधुकरिके, तवेदानीं कालएष मदविभ्रमगीतानां ।

४. सखि अवलम्बस्व मां, यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

५. यदि ममापि खल्वर्धं अर्चनफलस्य ।

६. अकथितेप्येतत्संपद्यते यतः एकमेव नौ जीवितं द्विधा स्थितं शरीरं ।

---

विभ्रमः " इत्यमरः । उपसृत्य समीपं प्राप्य । कथमित्यतर्कितोपनतवस्तुसन्दर्शननिबन्धनाश्चर्ये । मधुमासः वसन्तमासः, उपस्थितः संप्राप्तः इति काकुः । स्थितः इत्यत्र " द्यति स्यति मास्थामित्ति किति " इत्यनेनाकारस्य इकारादेशः । (कर्तरि क्तः ) अवलम्बस्व धारय, अर्धं अन्यूनानातिरिक्तसमांशः । यदीत्यतः परं भवतीति पदमध्याहार्यं । अकथितेऽपि एतस्मिन् अनुक्तेपि, एतत् अर्चनफलं संपद्यते निष्पद्यते, अये इति विस्मयार्थकं अव्ययं । अप्रतिबुद्धोऽपि विकासं अप्राप्तोऽपि, चूतप्रसवः रसालकुसुमं, अत्र इदानीं, बन्धनस्य प्रसववृन्तस्य, भङ्गेन भञ्जनेन सुरभिः सौरभवान् . भवति । कपोतकलक्षणन्तु '·कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ " इति सं—रत्नाकरे ॥

( सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति । )

अए अप्पडिवुद्धोवि चूदप्पसवो एत्थ बन्धणसुरभी होदि ।

( इति कपोतहस्तकं कृत्वा । )

तुमंसि मए चूदङ्कुर दिण्णो कामस्स गहीदधणुअस्स । पहिअजण-जुवइलक्खो पंचब्भहिओ सरो होहिं ।

(इति चूताङ्कुरं क्षिपति)

( प्रविश्य अपटीक्षेपेण कुपितः कञ्चुकी । )

कञ्चुकी—मा तावत् अनात्मज्ञे देवेन प्रतिषिद्धे वसन्तोत्सवे त्वामाम्रकलिकभङ्गं किमारभसे ।

उभे—पसीददु अज्जो । अगहीदत्थाओ वअं ।

---

१. अये अप्रतिवुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ।

२. त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे । पथिकजनयुवतिलक्ष्यः पंचाभ्यधिकः शरो भव ॥ परिकुपित is a better reading.

३. प्रसीदत्वार्यः । अगृहीतार्थे आवां । ...

---

त्वमिति ॥ हे चूताङ्कुर, त्वं, मया ( कर्त्र्या ) गृहीतधनुषे अखिलजगज्जयोद्देशेन करधृतकोदण्डदण्डायेत्यर्थः । कामाय मन्मथाय, दत्तः अर्पितोऽसि । अर्पणफलं प्रतिपादयति पथिकेत्यादिना । हे चूताङ्कुर, त्वं, पन्थानं गच्छन्तीति पथिकाः, पथिका इति जनाः, पथिकजनाः, तेषां युवतयः तरुण्यः ता एव लक्ष्याणि शरव्याणि, यस्य सः तादृशस्सन् । पञ्चभ्यः कुसुमारविन्दादिबाणपंचकात्, अभ्यधिकः अतिरिक्तः, शरः, बाणः, भव भूयाः इत्याशीरर्थे लोट्। मन्मथसन्निधौ विद्यमानैः पञ्चभिरपि बाणैः असाध्यं पथिकवनिताहृद्दलनात्मकं कृत्यं चिराय मदनेन वाञ्छितं त्वदेकायत्तमिति भावः । अत्र प्रस्तुतस्य चूताङ्कुरस्य पञ्चाभ्यधिकत्वासंबन्धेऽपि तत्संबन्धकथनात् संबन्धातिशयोक्तिः ॥

इतीत्यादि ॥ अपटी तिरस्करणी । "अपटी काण्डपटी स्यात् प्रतिसीरा यवनिका । तिरस्करिणी" इति कोशात् । कञ्चुकिलक्षणन्तु मातृगुप्ताचार्यैरुक्तं यथा "ये नित्यं सत्यसंपन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः कंचुकीयास्तु ते स्मृताः" इति आत्मानं परकीयत्वेन स्वाच्छन्द्यसम्पादनानर्हं निजस्वरूपं, न जानातीति अनात्मज्ञा तस्यास्संबुद्धिः अनात्मज्ञे इति सोपालम्भवचनमेतत् । आरभसे उपक्रमसे । अगृहीतः अज्ञातः अर्थः प्रस्तुतविषयः याभ्यां

कञ्चुकी—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च ।

तथाहि ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरवकं तत् कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

---

ते तादृशे । वसन्ते वसन्तकाले भवाः वासन्तिकाः "कालाट्ठञ्" इति ठञ् तस्य इकादेशश्च । तदाश्रयिभिः तद्वृक्षाश्रितैः, पत्रिभिः पक्षिभिश्च, देवस्य महाराजस्य, शासनं आज्ञावचनं, प्रमाणीकृतं अप्रमाणं प्रमाणं संपद्यमानं कृतं प्रमाणीकृतं । च्व्यन्तमेतत् मर्यादात्वेनाश्रयणादनुल्लङ्घितमित्यर्थः । न श्रुतं इति काकुः ॥

पूर्वोक्तमेव वासन्तिकवृक्षादिकर्तृकराजाज्ञानुल्लङ्घनप्रकारं विशदयति । चूतानामित्यादिना ॥ चूतानां रसालतरूणां, कलिका मञ्जरी, कलिकेति जातावेकवचनम् । कलिकाशब्दो मुख्यार्थे बाधितस्सन् अभिनवोद्गमनसाधर्म्यान्मञ्जरीं लक्षयति । चिरनिर्गतापि शिशिरावसानसमुद्भूतापि, स्वं स्वकीयं, रजः परागं, न बध्नाति न सम्पादयतीत्यर्थः । किंच यत् कुरवकं शोणकुरण्टककुसुमं, इदमपि जातावेकवचनं, सन्नद्धं विकासार्थं वृन्तात् निर्गतं, तदपि, कोरकावस्थया कलिकावस्थया, स्थितं स्तब्धं अभूदित्यर्थः । ( कर्तरि क्तः ) शिशिरे कोकिलकण्ठराक्तिमभञ्जके शिशिरर्तौ, गतेऽपि अतीतेऽपि, पुंस्कोकिलानां परभृतयूनां, रुतं स्वनः, (भावे क्तः) कण्ठेषु कण्ठप्रदेशेष्वेव, स्खलितं स्खालित्यं आपन्नं । ( कर्तरि क्तः) चकितः भीतः स्मरोऽपि मन्मथोऽपि, तूणात् निषङ्गात्, अर्धकृष्टं कामिजनवेधनार्थं बहिः अर्धांशेनाकृष्टं, शरं पुष्पबाणं, संहरति इति शङ्के ॥ अत्र श्लोके पादत्रयेऽपि कलिका कुरवक पुंस्कोकिलरुतानां चिरनिर्गमन विकाससन्नाह शिशिरापगमरूप पुष्कलकारणसत्वेऽपि तत्कार्यभूत रजो बन्धन विकास स्वर सारल्यरूपकार्यानुदयकथनात् मालाविशेषोक्तिः । तल्लक्षणन्तु "कार्यो जनिर्विशेषोक्तिस्सति पुष्कलकारणे" इति ॥ चतुर्थपादे तूत्प्रेक्षा । अत्र चकितत्वं शरसंहरणं उभयमुत्प्रेक्ष्यं । कामस्य प्रसूनशरत्वात् वसन्तपुष्पाणां असकलोत्पत्तेरियमुत्प्रेक्षा । तुरीयपादप्रतिपाद्यार्थं प्रति पूर्ववाक्यार्थानां हेतुत्वेनोट्टङ्कनात् काव्यलिङ्गं चेत्यनयोस्सङ्करः । अनयोश्च विशेषोक्त्या सह संसृष्टिरिति सुधीभिराकलनीयं । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

उभे—णत्थि सन्देहो । महाप्पहावो राएसी ।

प्रथमा—अज्जकदि दिअहाइं अम्हाणं मित्तावसुणा रट्ठिएण भट्टिणीपादमूलं पेसिदाणं । इत्थं अ णोपमदवणस्स पाळणकम्म समप्पिदं । ता आअन्दुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्दो ।

कंचुकी—भवतु । नपुनरेवं प्रवर्तितव्यं ।

उभे—अज्ज कोदूहलं णो । जइ इमिणा जणेण सोदव्वं कहेदु अअं किंणिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो ।

सानुमती—उस्सवप्पिआखु माणुसा । गुरुणा कालणेण होदव्वं ।

कंचुकी—बहुलीभूतमेतत् किं न कथ्यते । किंमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनं । public report

---

१. नास्ति सन्देहः । महाप्रभावो राजर्षिः ।

२. आर्ये कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलं प्रेषितयोः । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितं । तदागन्तुकतया अश्रुतपूर्व आवाभ्यामेष वृत्तान्तः ।

३. आर्य कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यं कथयत्वयं किन्निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ।

४. उत्सवप्रियाः खलु मानवाः । गुरुणा कारणेन भवितव्यं ।

---

नास्तीत्यादि ॥ राजा ऋषिरिव राजर्षिः । यद्वा राजसु ऋषिः राजर्षिः ऋषिवत् प्रशस्तकर्मानुष्ठानतत्परः इत्यर्थः । राष्ट्रियेण राज्ञः स्यालेन " राज्ञस्यालस्तु राष्ट्रियः" इत्यमरः । मित्रावसुना, भट्टिन्याः राज्ञ्याः, पादमूलं चरणसकाशं, प्रेषितयोः प्रहितयोः, आवयोः, कतिचिद्दिनानि, आसन् इति शेषः । इत्थं च इदानीमेव प्रमदवनपालनकर्म, उद्यानरक्षणव्यापारः, नौ आवयोः, अर्पितं दत्तं अधिकृतेनेति शेषः । आगन्तुकतया इदानीमेवागमनादित्यर्थः । पूर्वं श्रुतः श्रुतपूर्वः सः न भवतीति अश्रुतपूर्वः । कौतुहलं उत्साहः औत्सुक्यं वा । प्रतिषिद्धः निराकृतः । प्रियः उत्सवः येषां ते उत्सवप्रियाः " वा प्रियस्य " इत्यनेन प्रियशब्दस्य वैक-

उभे—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं।

कंचुकी—तेन हि अल्पं कथयितव्यं। यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवती रहसि शकुन्तला मोहात् प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापानुगतो देवः।

तथाहि।

रम्यं द्वेष्टि यथापुरा प्रकृतिभिर्नप्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्रएव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तः पुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम्॥ ९॥

१. श्रुतं राष्ट्रियमुखात् यावदङ्गुलीयकदर्शनम्।

त्पिकः परनिपातः। बहुलीभूतं विस्तृतमिति यावत्। अत्र भवत्योः युवयोरित्यर्थः। प्रत्यादेशः निराकृतिः, तल्लक्षणं, यत् कौलीनं लोकवादः "स्यात् कौलीनं लोकवादः" इत्यमरः। अङ्गुलीयकदर्शनं यावत् ऊर्मिकाविलोकनावधि। 'यावदवधौ।' "यावत्तावच्च साकल्येऽवधौ" इत्यमरः। ऊढपूर्वा पूर्वं परिणीतेत्यर्थः। पश्चात्तापं अनुशयम्॥

रम्यमिति॥ रम्यं मनोज्ञं वस्तु स्रक्चन्दनचन्द्रपादादिकं इति भावः। द्वेष्टि न प्रीतिविषयीकरोति अनेनारतिर्नाम मदनावस्था प्रतिपादिता। प्रकृतिभिः अमात्यैः, पुरा पूर्वं यथा, तथा, प्रत्यहं अहन्यहनि प्रत्यहं अव्ययीभावः, प्रतिदिनं, न सेव्यते नाश्रीयते। यथा पुरमित्यपि पाठः। पुरा भावं अनतिक्रम्य यथा पुरं पदार्थानतिवृत्तौ यथाशब्दस्समस्यते स चाव्ययीभावः। पूर्ववदित्यर्थः। किंच उन्निद्रः निद्रारहितस्सन्, शय्याप्रान्तेषु शयनतलपर्यन्तदेशेषु, विवर्तनैः विलोठनैरेव, क्षपाः रात्रीः विगमयति यापयति। अनेन जागराख्या मदनावस्था प्रतिपादिता। किंच, अन्तःपुरेभ्यः तात्स्थ्यात् तद्व्यपदेशः, अन्तःपुरस्थेभ्यः स्त्रीभ्यः इत्यर्थः, दाक्षिण्येन अत्यन्तानुरोधेन, "तुल्योऽनेकत्र दक्षिणः" इत्युक्तदक्षिणनायकोचितसरलस्वभावानुरोधेन वा, उचितां उत्तरत्वेन कथयितुं अर्हां, वाचं उक्तिं, ददाति प्रयच्छति, यावता परिमितेन उत्तरेण भूयांसः प्रश्नाः दत्तोत्तराः स्युः तथा व्यवहरतीत्यर्थः। किंच, यदा यस्मिन् समये गोत्रेषु स्खलितः शून्यहृदयत-

सानुमती—[1]पिअं मे ।

कंचुकी—अस्मात् प्रभवतो वैमनस्यात् उत्सवः प्रत्याख्यातः ॥

उभे—[2]जुज्जइ ।

(नेपथ्ये ।)

[3]एदु एदु भवं ।

कंचुकी—(कर्णं दत्वा ।) अये इतएवाभिवर्तते देवः । स्वकर्मानुष्ठीयतां ।

उभे—[4]तह । (इति निष्क्रान्ते ।)

(ततः प्रविशति पश्चात्तापसदृशवेषो राजाविदूषकः प्रतिहारी च ।)

कंचुकी—(राजानमवलोक्य ।) अहो सर्वास्ववस्थासु रमणीयत्वं आकृतिविशेषाणां । एवमुत्सुकोऽपि प्रियदर्शनो देवः ।

---

१. प्रियम्मे ।
२. युज्यते ।
३. एत्वेतु भवान् ।
४. तथा ।

---

या प्रणयिनी समाह्वानसमयेषु यदा नामस्खालित्यं प्राप्तः, तदा, चिरं चिराय, व्रीडया लज्जया, विलक्षः कथमेवमनालोच्य अभिहितमिति विस्मयान्वितः, भवति । "विलक्षो विस्मयान्वितः" इत्यमरः । अत्र पश्चात्तापादिके कारणे वक्तव्ये तदनुक्त्वा तत्कार्यभूतस्य रम्यद्वेषादेः कथनात् पर्यायोक्तं काव्यलिङ्गं च । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

प्रियमित्यादि ॥ प्रभवतः प्रबलात्, वैमनस्यात् मनोव्यथया, प्रत्याख्यातः तिरस्कृतः । युज्यते न्याय्यमेतदित्यर्थः । देवः राजा, अभिवर्तते आभिमुख्येन आगच्छतीत्यर्थः । अनुष्ठीयतां क्रियतां, अवस्थासु दशासु, आकृतिविशेषाणां विलक्षणाकारजुषां पदार्थानां, रमणीयत्वं शोभाविशेषः अस्तीति पदमध्याहार्यम् ॥

तथाहि ।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासापरक्ताधरः ।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

सानु—(राजानं दृष्ट्वा ।) ठाणे खु पच्चादेसविमाणिदावि इमस्स किदे सउन्दला किळम्मदि त्ति ।[1]

राजा—(ध्यानमन्दं परिक्रम्य ।)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

---

१. स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लाम्यतीति ।

---

प्रत्यादिष्टेति ॥ अयं राजा, प्रत्यादिष्टः निराकृतः, विशेषमण्डनविधिः राजार्हविविधविचित्राभरणालङ्कारः येन सः तादृशः, वामप्रकोष्ठे सव्ये मणिबन्धे, अर्पितं निक्षिप्तं धृतमिति यावत् । काञ्चनं स्वर्णमयं, एकमेव वलयं कङ्कणं, बिभ्रत् वहन् “नाभ्यस्ताच्छतुः” इत्यनेन नुम्प्रतिषेधः । श्वासेन सन्ततान्तस्सन्तापजनितसमधिकतरोष्णश्वासेन, अपरक्तः रक्तवर्णरहितः, विवर्ण इति यावत् । अधरः रदनच्छदः, यस्य सः तादृशः । चिन्तया शकुन्तलाविषयिण्या, यज्जागरणं तेन प्रतान्ते ग्लानिं आपन्ने, नयने नेत्रे यस्य सः तादृशस्सन्नपि, आत्मनः स्वस्य, तेजोगुणात् दीप्तिस्वरूपात्, संस्कारार्थं उत्कृष्टगुणाधानार्थं, उल्लिखितः शाणोपलारोपणपुरस्सरं घृष्टः, महामणिरिव उत्तमरत्नमिव, अत्र महच्छब्दविशेषणेन मणेः जात्यत्वं महत्वं सर्वगुणविशिष्टत्वं च अभिहितम् । क्षीणोऽपि कृशोऽपि, नालक्ष्यते क्षीणत्वेन नालोक्यते, यथा शाणोल्लेखितो महामणिः स्वतेजसा क्षीणः न दृश्यते तद्वदित्युपमा । अत्र चिन्तेति सङ्कल्पः, जागरेति निद्राच्छेदः, क्षीण इति तनुता, प्रत्यादिष्टेति विषयनिवृत्तिः, इति कामावस्था अपि सूचिताः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

प्रथममिति ॥ साराणि अङ्गानि यस्य सः सारङ्गः । “सारङ्गः पशुपक्षिणोः” इति शकन्ध्वादिषु पाठात् पररूपं । सारङ्गस्य हरिणस्य अक्षिणी इव अ-

**सानु**—णं ईदिसाणि तवास्सिणीभाअहेआणि !

**विदूषकः**—(अपवार्य ।) लेङ्घिदो एसो भूओवि सउन्दलात्राहिणा। ण आणे कहं चिकिच्छिदव्वोत्ति ।

**कञ्चुकी**—(उपगम्य ।) जयतु जयतु देवः महाराज प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदनस्थानानि महाराजः ।

**राजा**—वेत्रवति, मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुं । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**—जं देवो आणवेदि ।

(इति निष्क्रान्ता ।)

---

१. नन्वीदृशानि तपस्विन्याः भागधेयानि ।

२. लङ्घितः एषः भूयोऽपि शकुन्तलाव्याधिना ; न जाने कथं चिकित्सितव्यो भविष्यतीति ।

३. यद्देव आज्ञापयति ।

---

क्षिणी यस्यास्सा सारङ्गाक्षी "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च" इति वार्तिकेन उपमानपूर्वपदसमासस्य शब्दान्तरेण बहुव्रीहिः पूर्वसमासोत्तरपदलोपश्च । तया प्रियया प्रणयिन्या शकुन्तलया ( कर्त्र्या ) प्रथमं अग्रे, प्रतिबोध्यमानमपि रहः प्रणयकथनादिना बहुधा स्मृतिमापाद्यमानमपि, सुप्तं मोहमुपागतं । अतएव हतहृदयं दुष्टहृदयं, ( कर्तृ ) संप्रति इदानीं, अनुशयदुःखाय पश्चात्तापजनितविषादाय, तं अनुभोक्तुमित्यर्थः । विबुद्धं उद्बुद्धसंस्काराधीनधारावाहि स्मृतिसहितं इत्यर्थः । पूर्वार्धे विशेषोक्तिः । उत्तरार्धे विभावनालङ्कारः । पथ्यार्या वृत्तम् । "त्रिष्वंशकेषु पादो दलयोरायेषु दृश्यते यस्याः । पथ्येति नाम तस्याः छन्दो विद्भिस्समाख्यातं" इति लक्षणात् ॥ ७ ॥

**नन्वित्यादि** ॥ तपस्विन्याः शोच्यायाः शकुन्तलायाः । भागधेयानि भाग्यानि "भागरूपनामभ्यो धेयः" इत्यनेन स्वार्थे धेयप्रत्ययः । अपवारितलक्षणन्तु "रहस्यन्तु यदन्यस्य परावृत्याभिधीयते । अपवारितमेतत् स्यात्" इति । लङ्घितः आक्रान्तः । चिकित्सितव्यः औषधदानेन व्याधिनिवृत्तिं आपादनीयः । प्रत्यवेक्षिताः परिशीलिताः । काममनतिक्रम्य यथाकामं "अव्ययीभावः"

राजा—वातायन, त्वमपि स्वं नियोगमशून्यं कुरु ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

विदूषकः—किदं भवदा णिम्मच्छिअं । संपदं सिसिरातवच्छे अरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि ।

राजा—वयस्य, रन्ध्रोपपातिनो अनर्थाः इति यदुच्यते तदव्यभिचारि वचः । कुतः ।

मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः ॥८॥

---

१. कृतं भवता निर्मक्षिकं । सांप्रतं शिशिरातपच्छेदरमणीये अस्मिन् प्रमदवनोद्देशे आत्मानं रमयिष्यसि ।

---

स्वेच्छयेत्यर्थः । विनोदनस्थानानि कालयापनानुगुणप्रदेशाः । "अधिशीङ्स्थासां कर्म" इत्यनेन द्वितीया । अध्यास्तां आश्रयतु । भवानिति शेषः । वेत्रवतीति प्रतीहार्याः नाम । चिरप्रबोधात् रात्रौ चिरं जागरणेन । अथ इदानीं धर्मासनं सिंहासनं, अध्यासितुं अधिष्ठातुं, प्रत्यवेक्षितं परिशीलितं । वातायनेति कञ्चुकिनो नाम । नियोगं अधिकारं । मक्षिकाणामभावः निर्मक्षिकं अर्थाभावे अव्ययीभावः । अयं देशो विजनः कृतः इत्यर्थः । शिशिरे शीतले आतपच्छेदेन रमणीये मनोज्ञे, प्रमदवने उद्याने आत्मानं मनः रमयिष्यसि आनन्दयिष्यसि । अनर्थाः विपदः, रन्ध्रेषु छिद्रेषु, उपनिपातिनः अहमहमिकया निपतनशीलाः, इति यदुच्यते लौकिकैरिति शेषः । तत् वचः वचनं अव्यभिचारि नान्यथा भावि । सत्यमेवेत्यर्थः॥

मुनीति ॥ हे सखे मित्र, मुनिसुतायां शकुन्तलायां, राज्ञः मुनिसुतात्वेन प्रत्यभिज्ञानात्तथोक्तिः । यः प्रणयः प्रेम, तस्य स्मृतिः स्मरणं, तस्याः रोधिना आच्छादकेन, तमसा अज्ञानेन, इदं मम मनश्च, मुक्तं त्यक्तं । प्रहरिष्यता कामिजनरूपं लक्ष्यं बाणैः ताडयिष्यता मनसिजेन मन्मथेन "हलदन्तात् सप्तम्याः संज्ञायाम्" इत्यनेनालुक् । धनुषि ऐक्षवचापे, चूतशरश्च रसालकुसुमरूपः बाणश्च, निवेशितः निक्षिप्तः । मम शकुन्तलावियोगः वियोगिजनदुस्सहो वसन्तमासश्च युगपत् प्रादुरासीत् इत्यर्थः । द्रुतविलम्बितवृत्तम् । "द्रुतविलम्बितमाहनभौ भरौ" इति लक्षणात् । विषमालंकारः ॥ ८ ॥

विदूषकः—चिट्ठदाव । इमिणा दण्डकट्ठेण कन्दप्पवाहिं णासेस्सं ।

(इति दण्डकाष्ठमुद्यम्य चूतांकुरं पातयितुं इच्छति ।)

राजा—(सस्मितं ।) भवतु दृष्टं ब्रह्मवर्चसं । सखे क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

विदूषकः—णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा । माहवीमण्डवे इमं वेलं अदिवाहिस्सं । तहिं मेचित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहित्ति ।

राजा—ईदृशं हृदयविनोदनस्थानं । तत्तमेव मार्गमादेशय ।

विदूषकः—ईदो इदो भवं ।

(उभौ परिक्रामतः । सानुमत्यनुगच्छति ।)

विदूषकः—ऐसो मणिसिलापट्टसणाहो माहवीमण्डवो उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्चदि । तापविसिअ णिसीददु भवं ।

---

१. तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि ।

२. नन्वासन्नपरिचारिका चतुरिका भवता सन्दिष्टा । माधवीमण्डपे इमां वेलां अतिवाहयिष्ये । तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः, प्रतिकृतिं आनयेति ।

३. इतइतो भवान् ।

४. एष मणिशिलापट्टसनाथः माधवीमण्टपः उपचाररमणीयतया निस्संशयं स्वागतेनेव नौ प्रतीच्छति । तत प्रविश्य निषीदतु भवान् ।

---

तिष्ठेत्यादि ॥ कन्दर्पव्याधिं मान्मथबाधां । चूताङ्कुरं रसालतरुकलिकां । ब्रह्मणो वर्चः ब्रह्मवर्चसं "ब्रह्महस्तिभ्यां वर्चसः" इत्यनेन समासान्तोऽच् । ब्रह्मतेजः इत्यर्थः । किंचिदनुकारिणीषु ईषत्सदृशीषु । विलोभयामि आनन्दयामि । माधवी वासन्ती लता । अतिवाहयिष्ये यापयिष्ये । स्वहस्तेन मद्धस्तेनेत्यर्थः । प्रतिकृतिं प्रतिमां । हृदयस्य मनसः । विनोदनस्थानं, व्यथापनोदनार्हो देशः । आदेशय दर्शय । मणिमयः चन्द्रकान्तस्वरूपः यः शिलापट्टकः चतुरश्रोपलः, त-

(उभौ प्रवेशं कृत्वोपविष्टौ ।)

सानु—लदासंस्सिदा देक्खिस्संदाव सहीए पडिकिदिं । तदो से भत्तुणो वहुमुहं अणुराअं णिवेदइस्सं ।

(इति तथा कृत्वा स्थिता ।)

राजा—सखे सर्वं इदानीं स्मरामि शकुन्तलायाः प्रथम वृत्तान्तं । कथितवानस्मि भवतेच । स भवान् प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित् संकीर्तितं तत्र भवत्यानाम । कच्चिदहमिव विस्मृतवानसित्वं ।

विदू—णे विसुमरामि । किंदु सव्वं कहिअ अवसाणे, उण तुए परिहासविअप्पओ एसो ण भूदत्थोत्ति आचक्खिदं । मएवि मिप्पिण्ड बुद्धिणा तह एव्व गहीदं । अहवा भविदव्वदाखुबलवदी ।

---

१. लतासंश्रिता द्रक्ष्यामि तावत् सख्याः प्रतिकृतिं । ततोऽस्याः भर्तुः बहुमुखमनुरागं निवेदयिष्यामि ।

२. न विस्मरामि । किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया परिहासविजल्प-एषः न भूतार्थः इत्याख्यातं । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतं । अथवा भवितव्यता खलु बलवती ।

---

त्सनाथः तत्सहितः । उपचारेण ( उपहारेत्यपि पाठः ) सम्यक् सम्मार्जनपुष्पविसरणादि लक्षणेन । रमणीयतया मनोज्ञतया । नौ आवां, स्वागतेन स्वागतप्रश्नेन । प्रतीच्छतीव सादरं आह्वानपुरस्सरं अङ्गीकरोतीवेत्युत्प्रेक्षा । निस्संशयं अर्थाभावे अव्ययीभावः । संशयो नास्तीत्यर्थः । निषीदतु उपविशतु "पाघ्रे" त्यादिना सदेस्सीदादेशः ॥

लतेत्यादि ॥ वहुमुखं नानाप्रकारं । अनुरागं प्रेमाणं, निवेदयिष्यामि कथयिष्यामि । प्रत्यादेशवेलायां निराकरणसमये । तत्रभवत्याः शकुन्तलायाः । कच्चित् शब्दः आत्मप्रीत्याविष्कारार्थकः । "कच्चित् कामप्रवेदने" इत्यमरः । अवसाने वचनावसानसमये । परिहासविजल्पः नर्मालापः, न भूतार्थः न यथार्थः । मृत्पिण्डवत् अप्रकाशा बुद्धिः मतिः यस्य सः तादृशेन मयापि तत भवदीयं तथैवेति परिहासविजल्प इत्येव । गृहीतं अङ्गीकृतं अवगतं वा । भवितव्यता दैवम् ।

सानु—एव्वं णेदं ।

राजा—(ध्यात्वा ।) सखे त्रायस्व मां ।

विदूषकः—भो, किंएदं । अणुववण्णं खु ईदिसं तुइ । कदावि सप्पुरिसा सो अवत्तव्वा ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ ।

राजा—वयस्य निष्कारणपरित्यागविक्लवायाः प्रियायाः समवस्थां अनुस्मृत्य बलवदशरणोऽस्मि । सहि ।

इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता स्थिता
तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं वाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति मां ॥ ९ ॥

---

१. एवमेवैतत् ।

२. भोः किमेतत् । अनुपपन्नं खलु ईदृशं त्वयि । कदापि सत्पुरुषाः शोकवक्तव्याः न भवन्ति । ननु प्रवातेऽपि निष्कम्पाः गिरयः ।

---

बलवती अनिवार्यमित्यर्थः । त्रायस्व रक्ष । अनुपपन्नं अयुक्तं । सत्पुरुषाः साधवः शोके दुःखे तद्विषयकप्रस्तावे इत्यर्थः । वक्तव्याः कथनीयाः न भवन्ति । प्रवाते जञ्झावातेऽपि । गिरयः पर्वताः निष्कम्पाः निश्चलाः भवन्ति इति शेषः । निष्कारणनिराकरणं अहेतुकत्यागः, तेन विक्लवायाः विह्वलायाः, समवस्थां दुर्दशां, अनुस्मृत्य चिन्तयित्वा । बलवत् अत्यन्तं । अशरणोऽस्मि अनाथोऽस्मि ॥

इत इति ॥ सा शकुन्तला । इतः अस्मात् मत्सकाशादित्यर्थः । प्रत्यादेशात् निराकरणात् हेतोः स्वजनं निजबन्धुजनं शार्ङ्गरवप्रभृतिं । अनुगन्तुं अनुसर्तुं, व्यवसिता प्रवर्तते स्म । तदा गुरुणा पित्रा कण्वेन यद्वा आचार्येण समे सदृशे । गुरोः पितुः शिष्ये प्रधानछात्रे ( शार्ङ्गरवे ) अत्र कथितपदत्वाख्यो दोषो नाशङ्कनीयः तात्पर्यभेदेन लाटानुप्रासार्थमेव तथा प्रयोगात् । तिष्ठ इति उच्चैः वदति सति । स्थिता परिहृतगतिरासीत् । पुनः भूयोऽपि । क्रूरे कठिनहृदये, मयि मामुद्दिश्येत्यर्थः । वाष्पस्य अश्रुजलस्य, प्रसरेण प्रवाहेण कलुषां आविलां, दृष्टिं, अर्पितवतीति यत् तत् सविषं विषसहितं शल्यमिव मां अन्तः हृदये, दहति सन्तापयति । उपमालंकारः । शिखरिणी वृत्तं । "रसैरुद्रैः छिन्ना यमनसभलागःशिखरिणी" इति लक्षणात् ॥ ९ ॥

सानु—अम्हहे ईरिसी सकज्जपरदा। इमस्स सन्दावेण अहं रमामि।

विदूषकः—भो अत्थि मे तक्को। केणवि तत्तहोदी आआसचारिणा णीदेत्ति।

राजा—कः पतिदेवतामन्यः परामष्टुमुत्सहेत। मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि। तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते।

सानु—सम्मोहो खु विह्मअणीओण पडिबोहो।

विदूषकः—जइ एव्वं अत्थि क्खु समाअमो कालेण तत्तहोदीए।

राजा—कथमिव।

विदूषकः—ण खु मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं देक्खिदुं पारेन्ति।

---

१. अहो ईदृशी स्वकार्यपरता। अस्य सन्तापेन अहं रमे।
२. भो अस्ति मे तर्कः। केनापि तत्रभवत्याकाशचारिणा नीतेति।
३. सम्मोहः खलु विस्मयनीयः। न प्रतिबोधः।
४. यद्येवं अस्ति खलु समागमः कालेन तत्रभवत्या।
५. न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः।

---

अहो इत्यादि॥ स्वस्य कार्यं स्वकार्यं तत् परं प्रधानं यस्याः सा स्वकार्यपरा तस्याः भावः स्वकार्यपरता "त्वान्तं क्लीबं तलन्तं स्त्रियां" इत्यभियुक्तोक्तिबलात् तलन्तस्य स्त्रीत्वं। सन्तापेन दुःखेन। रमे क्रीडामि। तर्कः ऊहः। "अध्याहारस्तर्कऊहः" इत्यमरः। आकाशचारिणा गगनतलसंचारिणा, केनापि सिद्धविद्याधरादिषु अन्यतमेन। नीता अपहृता। पतिः भर्ता देवता यस्यास्सा तां अन्यः अपरः को वा। परामृष्टुं स्पृष्टुं अपहर्तुं इत्यर्थः। उत्सहेत शक्नुयात्। जन्मप्रतिष्ठा जननस्थानं। तत्सहचारिणीभिः मेनकासखीभिः। आशङ्कते तर्कयति। सम्मोहः शकुन्तलाविस्मरणं। विस्मयनीयः आश्चर्यार्हः। प्रतिबोधः प्रत्यभिज्ञा न विस्मयनीयः इति शेषः। पारयतः समर्थौ भवतः॥

राजा—वयस्य ।

स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत् फलमेव पुण्यं ।
असान्निवृत्त्यैतदतीतमेवं मनोरथानामतटाः प्रवाहाः ॥ १० ॥

विदूषकः—मा एव्वं णं अंगुलीअअं एव्व णिदंसणं, अवस्सं भावी अचिंतणिज्जो समाअमो होदित्ति ।

राजा—(अङ्गुलीयकं विलोक्य ।) अये, इदं तावदसुलभस्थानभ्रंशि शोचनीयं ।

तव सुचरितमंगुलीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासुतस्याः च्युतमसि लब्धपदं यदङ्गुलीषु ११

---

१. मैवं । नन्वङ्गुलीयकमेव निदर्शन । अवश्यं भाव्यचिन्तनीयः समागमो भवतीति ।

---

स्वप्न इति ॥ प्रागनुभूतशकुन्तलादर्शनसम्भाषणप्रत्याख्यानादि सर्वं स्वप्नो नु, स्वाप्निकपदार्थानुभववत् क्षणदृष्टनष्टत्वात् तत्त्वेनाशङ्का । दुःखितस्य स्वप्नानुभवनिमित्तनिद्राया एवाप्रसक्तेराह मायेति । मायानु अयथावस्थितवस्तुस्वभावसन्दर्शनैकशीलः ऐन्द्रजालिकव्यापारो वा । आकस्मिके तादृशैन्द्रजालिकोपच्छन्दने हेत्वभावादाह, मतीति । मतिभ्रमो नु, चित्तभ्रान्तिर्वा, स्वस्थस्य तादृशचित्तभ्रमासम्भवादाह, तावदिति । तावत्फलमेव लोकोत्तरतादृशस्त्रीरत्नसन्दर्शनमात्रफलकमेव पुण्यं सुकृतं, क्लिष्टंनु नष्टमभूत् किं । तत् तादृशं वस्तु असन्निवृत्यै अपुनरावृत्तये यद्वा असन्निवृत्य एतदिति पदच्छेदः । एतत् असन्निवृत्य पुनरप्यप्रत्यावृत्य, अतीतमेव गतमेव । पुनरावृत्ति शङ्का शूकनिवृत्त्यभिप्रायकएवकारः । मनोरथानां अभिलाषाणां प्रवाहाः स्रोतांसि, तटाभ्यां परिमातुं अशक्याः इति भावः । सन्देहालंकारः । वृत्तं उपजातिः ॥ १० ॥

तवेति ॥ हे अङ्गुलीय ऊर्मिके, तव सुचरितं सुकृतं, ममेव मदीयसुकृतमिव, प्रतनु अत्यल्पं, नूनं निश्चये । फलेन कार्येण विभाव्यते सम्यग् ज्ञायते । तदेव विशदयति । अरुणेत्यादिना । यत् यस्मात् कारणात् अरुणैः रक्तवर्णैः नखैः नखरैः, मनोहरासु मनोज्ञासु, तस्याः, अङ्गुलीषु करशाखासु, लब्धपदं प्राप्तस्थानं सत्, च्युतमसि भ्रष्टमसि। वाक्यार्थहेतुकं काव्यलिङ्गं अलङ्कारः। पुष्पिताग्रावृत्तं११

सानु—जइ अण्णहत्थगदं भवे सच्चं एत्त सोअणिज्जं भवे ।

विदूषकः—भो इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थब्भासं पाविदा ।

सानु—मम वि कोदूहलेन आआरिदो एसो ।

राजा—श्रूयतां । स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ।

विदू—तदो तदो ।

राजा—पश्चादिमां मुद्रां तदंगुळौ निवेशयता मया प्रत्यभिहिता ।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तं ।

---

१. यद्यन्यहस्तगतं भवेत् सत्यमेव शोचनीयं भवेत् ।
२. भोः इयं नाममुद्रा केनोद्घातेन तत्रभवत्याः हस्ताभ्याशं प्रापिता ।
३. ममापि कौतूहलेन आकारितः एवः ।
४. ततस्ततः ।

---

यदीत्यादि । यदि अन्यहस्तगतं भवेत् तदा सत्यमेव, शोचनीयं दुःखितव्यं, स्यात् । उद्घातेन उपक्रमेण "उद्घातः कथ्यते धीरैः स्खलिते सद्युपक्रमे" इति विश्वः । अभ्याश समीपम् । कौतूहलेन प्रश्नविषयकौत्सुक्येन आकारितः आहूतः आकृष्टः इति यावत् । ममाप्येतच्छ्रवणे कौतूहलमासीत् । तदेवानेन पृष्टमिति भावः । बाष्पेण अश्रुणा सहवर्तते यस्मिन् कर्मणि तत् सबाष्पं क्रियाविशेषणमेतत् । आह अवोचत् । भूतार्थे अव्ययमेतत् । कियच्चिरेण कियता कालेन, प्रतिपत्तिं प्रतिसन्देशं, दास्यति मह्यमिति शेषः । मुद्रां नामाङ्कितं अङ्गुलीयकं, निवेशयता अर्पयता, प्रत्यभिहिता प्रत्युक्ता ॥

एकैकमिति । हे प्रिये अत्र मुद्रिकायां, दिवसे दिवसे प्रतिदिनं "नित्यवीप्सयोः" इत्यनेन द्वित्वम् । मदीयं मत्संबन्धि । नामाक्षरं "दुष्यन्तमहाराजः" इति मन्नामधेयघटकवर्णानि, एकैकं एकैकशः, गणय । यावत् (अव्ययमेतत्) यावता कालेन, अन्तं अवसानं, गच्छति प्राप्नोति । तावत् तावता कालेन, मद्-

तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपेष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितं ।

सानु—[1]रमणीओ खु अवही विहिणा विसंवादिदो ।

विदू—[2]कहं धीवलकप्पिअस्स लोहिअमच्चस्स उदलब्भन्तले आसी ।

राजा—शची तीर्थं वन्दमानायाः सख्यास्ते हस्तात् गङ्गास्रोतसि परिभ्रष्टम् ।

विदू—[3]जुज्जइ ।

सानु—[4]अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो आसी । अहवा ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । कहं विअ एदं ।

---

१. रमणीयः खल्ववधिः । विधिना विसंवादितः ।
२. कथं धीवरकल्पितस्य लोहितमत्स्यस्य उदराभ्यन्तरे आसीत ।
३. युज्यते ।
४. अतएव तपस्विन्याः शकुन्तलायाः अधर्मभीरोरस्य राजर्षेः परिणये सन्देहः आसीत । अथवा ईदृशोऽनुरागोऽभिज्ञानं अपेक्षते । कथमिवैतत् ।

---

वरोधगृहप्रवेशं मदीयान्तःपुरप्रवेशं, नेता प्रवेशयिता, जनः पुरुषः, तव समीपं उपकण्ठं, उपेष्यति प्राप्स्यति, इति प्रत्यभिहितेति पूर्वेण सम्बन्धः । वसन्ततिलकं वृत्तम् । छेकवृत्यनु प्रासौ काव्यलिङ्गं च ॥ १२ ॥

तच्चेत्यादि । दारुणात्मना क्रूरचित्तेन । मोहात् अज्ञानात् । नानुष्ठितं न संपादितम् । अवधिः कालमर्यादा, विसंवादितः अन्यथा कृतः । धीवरेण जालिकेन, कल्पितस्य खण्डितस्य, अभ्यन्तरे मध्ये । स्रोतसि प्रवाहे । युज्यते उपपन्नमेतदित्यर्थः । तपस्विन्याः शोच्यायाः, अधर्मात् पापात् । भीरोः भीतस्य । परिणये उ-

राजा—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

विदू—(आत्मगतम् ।) गहीदो णेण पन्था उम्मत्ताणं ।

राजा—

कथन्नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।

अथ वा ।

अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

विदू—(आत्मगतम् ।) कैहं बुभुक्खाए खादिदव्वोह्मि ।

राजा—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

१. गृहीतः अनेन पन्थाः उन्मत्तानाम् ।
२. कथं बुभुक्षया खादितव्योऽस्मि ।

द्वाहे, अभिज्ञानं स्मारकं वस्तु । अपेक्षते इति काकुः । न कदाप्यपेक्षेतेत्यर्थः। उपालप्स्ये निन्दिष्यामि । उन्मत्तानां चित्तभ्रमं आपन्नानाम् ॥

कथन्विति । हे अङ्गुलीय, बन्धुराः मनोज्ञाः, कोमलाः अतिमृदुलाः, अङ्गुलयः करशाखाः यस्य तादृशं, तं करं शकुन्तलापाणिपल्लवं, विहाय त्यक्त्वा, अम्भसि जले, कथन्नु मग्नं असि । न्विति प्रश्ने स्वोक्तमेवाक्षिपति अथवेति । नामेति प्रसिद्धौ । अचेतनं चैतन्यविहीनं जडवस्तु (कर्तृ) गुणं वस्त्वन्तरवर्तिसर्वोत्तरसौन्दर्यादिगुणं (कर्म) न लक्षयेत् न पश्येत् इति सामान्येन विशेषसमर्थनम् । मयैव अत्रैवकारः चेतनामूलकपदार्थगतोत्कर्षानकर्षविचारसामर्थ्याभिप्रायकः।कस्मात् किंन्निमित्तं, प्रिया प्रेयसी, अवधीरितातिरस्कृता । त्वया त्वचेतनत्वादिदं अनुचितं कार्यं अकारि । मयातु सचेतनेनाप्यनुचितकारिणा त्वां प्रति न किंचिदपि वक्तव्यमिति भावः । अत्राचेतने अङ्गुलीये चेतनव्यवहारारोपात् समासोक्तिः । प्रथमद्वितीयपादप्रतिपादितस्य समर्थनीयस्य विशेषस्य अचेतनं नामेत्यादितृतीयपादेन सामान्येन समर्थनादर्थान्तरन्यासः । वंशस्थवृत्तम् ॥ १३ ॥

कथमित्यादि । बुभुक्षया क्षुधा, खादितव्यः भक्षणीयः आक्रान्त इति यावत् । अनुशयः पश्चात्तापः, अनुकम्प्यतां दयया रक्ष्यताम् । अपटी यवनिका

( प्रविश्यापटीक्षेपेण चित्रफलकहस्ता चतुरिका । )

चतुरिका—ईअं चित्तगदा भट्टिणी ।

(इति चित्रफलकं दर्शयति ।)

विदू—साहु वअस्स, महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु ।

सानु—अम्मो एसा राएसिणो णिउणदा । जाणे सही अग्गदो मे वट्टादीत्ति ।

राजा—

यद्यत्साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥ १४ ॥

---

१. इयं चित्रगता भट्टिनी ।

२. साधु वयस्य मधुरावस्थानदर्शनीयः भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नो-न्नतप्रदेशेषु ।

३. अहो एषा राजर्षेर्निपुणता जाने सख्यग्रतो मे वर्तते इति ।

---

"अपटीकाण्डपटस्स्यात् प्रतिसीरा यवनिका तिरस्करणी" इति हलायुधः । भट्टिनी राज्ञी । भावस्य शकुन्तलाविषयक त्वदीयमनोभावस्य, अनुप्रवेशः अभ्यन्तरीकरणं । मधुरं मनोहरं, यत् अवस्थानं प्रतिमारूपशकुन्तलासंबन्धिकरचरणाद्यङ्गविन्यासप-रिपाटी । तेन दर्शनीयः सम्यक् लक्षणीयः । निम्नोन्नतप्रदेशेषु नाभीजठरकन्धरा स्तनभारनासिका भ्रूप्रभृतिषु स्थानेषु, स्खलतीव अनेन राज्ञः आलेख्यविषये अ-न्यादृशं हस्तचातुर्यं सूचितम् ॥

यद्यदिति । यद्यपि, चित्रे आलेख्ये, यद्यत् साधु सुश्लिष्टं, न स्यात्, तत्तत् अन्यथा यथावस्थितरीत्यपेक्षया विलक्षणप्रकारेण, क्रियते कल्प्यते । तथापि, तस्याः शकुन्तलायाः, लावण्यं सौन्दर्यं, रेखया आलेख्यसमर्पितप्रतिकृतिरेखया (सह) किंचित् ईषत्, अन्वितं सङ्गतं, अभवदिति शेषः । पथ्यावक्त्रं वृत्तम् । "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्" इति लक्षणात् ॥ १४ ॥

सानु—सरिसं एदं पच्छादावगुरुणो सिणेहस्स अणवलेवस्स अ ।

विदू—भो दाणिं तिण्णि तत्तहोदीओ दीसन्ति । सव्वाओअ दंसणिज्जाओ । कदमा इत्थ तत्तहोदी सउन्दला ।

सानु—अणभिण्णो खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो ।

राजा—त्वं तावत् कतमां तर्कयसि ।

विदू—तक्केमि जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण, केसन्तेण उब्भिण्णसेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे इसि परिस्सन्ता विअ आलिहिदा सा सउन्दला । इदराओ सहीं ओत्ति ।

राजा—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

---

१. सदृशमेतत् पश्चात्तापगुरोः स्नेहस्य अनवलेपस्य च ।

२. भोः इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते । सर्वाश्च दर्शनीयाः । कतमात्र तत्रभवती शकुन्तला ।

३. अनभिज्ञः खलु ईदृशस्य रूपस्य मोघदृष्टिरयं जनः । व्यर्थ-

४. तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेन उद्भिन्नस्वेदबिन्दुना वदनेन विशेषतो अपसृताभ्यां बाहुभ्यां अवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत् परिश्रान्ते वा लिखिता सा शकुन्तला । इतरे सख्याविति ।

---

सदृशमित्यादि ॥ पश्चात्तापेन अनुशयेन गुरोः अधिकस्य, अनवलेपस्य दर्पाभावस्य च । दर्शनीयाः सुन्दर्यः । रूपस्य अनभिज्ञः "कर्मणि षष्ठी" अतएव मोघदृष्टिः निष्फलचक्षुष्कः । दर्शनीयवस्तुसन्दर्शनं हि चक्षुषः फलं तदभावे सतोऽपि चक्षुषोर्व्यर्थतैवेति भावः । केशबन्धनं केशनहनं । तस्मात् उद्वान्तानि बहिर्विगळितानि, कुसुमानि येन, तादृशेन, केशान्तेन उद्भिन्नाः समन्तादाविर्भूताः स्वेदबिन्दवः घर्मजलकणाः यस्मिन् तादृशेन, वदनेन मुखेन (उपलक्षिता) अपसृताभ्यां खेदात् स्रस्ताभ्यां, बाहुभ्यां (उपलक्षिता) ईषत् किञ्चित् परिश्रान्तेव, या आलिखिता, सा शकुन्तला । भावचिह्नं मदभिप्रायाविष्कारकं लिङ्गम् ॥

खिन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं दृश्यमिदं वर्णकोच्छ्वासात् ॥ १९ ॥

चतुरिके, अर्धलिखितमेतत् विनोदस्थानं । गच्छ । वर्तिकां तावदानय ।

चतु—[1]अज्ज माढव्व, अवलंब चित्तफलअं जावआअच्छामि ।

राजा—अहमेवैतदवलम्बे ।

(इति यथोक्तं करोति ।)

(निष्क्रान्ता चेटी ।)

राजा—अहं हि ।

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहुमन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातस्सखे प्रणयवान् मृगतृष्णिकायाम् ॥ १६ ॥

---

१. आर्य माढव्य, अवलम्बस्व चित्रफलकं यावदागच्छामि ।

---

**खिन्नेति** ॥ रेखायाः प्रान्तेषु पर्यन्तदेशेषु, मलिनः आविलः, खिन्नानां सात्विकोदयेन संजातस्वेदानां, अङ्गुलीनां, विनिवेशः स्थितिः, दृश्यते लक्ष्यते । कपोलपतितं लिखिताकृतिकपोलप्राप्तं, इदं पुरतो दृश्यं, अश्रु अस्रसलिलं च, वर्णकस्य लेपद्रव्यविशेषस्य, उच्छ्वासात् उच्छूनतया हेतुना, दृश्यं द्रष्टुं योग्यं आस्ते-इतिशेषः । पथ्यार्यावृत्तम् ॥ १९ ॥

**साक्षादिति** ॥ हे सखे मित्र, पूर्वं पुरा, साक्षात् प्रत्यक्षं "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः । उपगतां मदन्तिकं स्वयमेवागतां, प्रियां प्रेयसीं (शकुन्तलामिति) यावत् । अपहाय त्यक्त्वा, संप्रति, चित्रे आलेख्ये, अर्पितां स्थापितां, इमां पुरतो दृश्यमानां बहुमन्यमानः आदरेणालोकमानः, अहं, पथिमार्गे, निकामजलां संपूर्णोदकां, स्रोतोवहां नदीं, अतीत्य उल्लङ्घ्य, मृगतृष्णिकायां मरीचिकायां, "मृगतृष्णामरीचिका" इत्यमरः । प्रणयवान् आसक्तः, जातः अभूवं । वाक्यार्थवृत्ति निदर्शना । "वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना" इति लक्षणात् । वसन्ततिलकं वृत्तं ॥ "उक्तं वसन्ततिलकं तभजाजगौगः" इति लक्षणात् ॥ १६ ॥

विदू—(आत्मगतम् ।) [1]एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्णिआं संक्रन्तो ।

(प्रकाशम् ।)

[2]भो अवरं किं एत्थ लिहिदव्वं ।

सानु—[3]जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे ।

राजा—श्रूयतां ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

---

१. एषोऽत्रभवान् नदीं अतिक्रम्य मृगतृष्णिकां सङ्क्रान्तः ।
२. भोः अपरं किमत्र लेखितव्यम् ।
३. यो यः प्रदेशः सख्याः मे अभिरूपः तं तं आलिखितुकामो भवेत् ।

---

कार्येति ॥ अनेन श्लोकेन आश्रमस्थं पूर्वानुभूतं तदानीन्तनं उद्दीपनं विभावगणं स्मरति । सैकतेषु तोयोत्थितपुळिनदेशेषु "तोयोत्थितं तत् पुलिनं सैकतं सिकतामयं" इत्यमरः । लीनानि निषण्णानि हंसमिथुनानि मराळद्वन्द्वानि यस्यां सा तादृशी, मालिनी तन्नाम्नी, स्रोतोवहा नदी "स्रोतस्विनी द्वीपवती" इत्यमरः । कार्या अवश्यं लेखनीयेत्यर्थः। "ऋहलोर्ण्यत्" इत्यनेन करोतेर्ण्यत् वृद्धिश्च । तां अभितः तस्याएव मालिनीनद्याः उभयतः, (विद्यमानाः) 'अभितः परितस्सये' त्यादिना द्वितीया । निषण्णाः सुखासीनाः, हरिणाः सारंगाः, येषु ते तादृशाः, पावनाः परिशुद्धाः, गौरीगुरोः पार्वतीजनकस्य हिमवतइति यावत् । पादाः प्रत्यन्तपर्वताः "पादाः प्रत्यन्तपर्वताः" इत्यमरः । कार्याः इति लिङ्गवचनविपरिणामेनात्रापि संबध्यते । शाखासु, लंबितानि विषक्तानि, वल्कलानि वल्कानि यस्य सः, तादृशस्य, तरोः वृक्षस्य, अधः मूलदेशे, कृष्णमृगस्य कृष्णसाराख्यसारंगविशेषस्य, शृङ्गे विषाणे, वामनयनं सव्यलोचनं, कण्डूयमानां कण्डूविनयनाय घर्षयन्तीं, मृगीं सारंगीं च, निर्मातुं स्रष्टुं, इच्छामि वाञ्छामि । "इषुगमियमांछः" इत्यनेनेषेष्छस्यछः। स्वभावोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

विदू—(आत्मगतम्) जह अहं देक्खामि पूरिदव्वं णेण चित्तफलअं लम्बकुचाणं तावसाणं कदम्बेहिं[1] ।

राजा—वयस्य, अन्यच्च शकुन्तलायाः प्रसादनमभिप्रेतमस्माभिः ।

विदू—किं विअ[2] ।

सानु—वणवासस्स सोउमारस्स अ विणअस्सअ जं सरिसं भविस्सदि[3] ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥

---

१. यथाहं पश्यामि पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः।
२. किं इव ।
३. वनवासस्य सौकुमार्यस्य अविनयस्य च यत् सदृशं भविष्यति ।

---

यथेत्यादि ॥ अनेन, चित्रफलकं लम्बमानः अधोऽवस्रंसमानः, कूर्चः चिबुकदेशरूढानि अधो लम्बमानानि, रोमाणि, येषां ते तादृशानां, तापसानां ऋषीणां, कदम्बैः समूहैः, पूरितव्यं इति अहं पश्यामि तर्कयामीत्यर्थः । प्रसाधनं-अलंकरणं, अभिप्रेतं अभिमतं । वनवासस्येत्यादिना पुष्पादिकं । सौकुमार्यस्य च इत्यनेन कुसुमानामपि यत् कोमलतरं, तदेकद्वित्रिधारणं च । अविनयस्य चेत्यनेन शेखरादिव्यावर्तनं च व्यज्यते ॥

कृतमिति ॥ हे सखे मित्र, कर्णे श्रवणे, अर्पितं आहितं, बन्धनं वृन्तं, यस्य तत् । तादृशं, गण्डं कपोलं अभिव्याप्य आगण्डं, गण्डं मर्यादीकृत्येत्यर्थः । विलम्बिनः लम्बमानाः केसराः यस्य तत् तादृशं, शिरीषं शिरीषकुसुमं, न कृतं न चित्रे विलिखितं । उत्तरार्धे विद्यमानो वा शब्दः यच्चब्दार्थकः, किंच शरच्चन्द्रस्य शारदसुधांशोः, मरीचिवत् किरणवत्, कोमलं अतिमनोहरं, मृणालसूत्रं च बिसतन्तुश्च, स्तनान्तरे पयोधरमध्ये, न रचितं न निहितं, शकुन्तलायाः स्तनयोः मध्ये मृणालसूत्रमात्रनिवेशयोग्यावकाशवत्वकथनेन तयोरतिपीवरतया परस्परोत्पीडनत्वं, तेनालिङ्गनयोग्यत्वं, तेन च तदप्राप्त्या स्वस्य अधन्यत्वादि व्यज्यते ।

विदू—भो, किंणु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं ओवारिअ चइदचइदाविअ ठिआ ।

(सावधानं निरूप्य दृष्ट्वा ।)

आ एसो दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं अहिलङ्घेदि महुअरो ।

राजा—ननु वार्यतामेष धृष्टः ।

विदू—भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि ।

राजा—युज्यते । अयि भोः कुसुमलता प्रियातिथे, किमत्र परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥१९॥

---

१. भोः किन्नु तत्रभवता रक्तकुवलयपल्लवशोभिना अग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता ।

२. आः, एषः दास्याः पुत्रः कुसुमरसपाटच्चरः तत्रभवत्याः वदनं अभिलङ्घयति मधुकरः ।

३. भवानेवाविनीतानां शासिता अस्य वारणे प्रभविष्यति ।

---

स्वभावोक्तिः उपमाच । वसन्ततिलकं वृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १८ ॥

रक्तौ अरुणौ यौ कुवलयपल्लवौ, तद्वच्छोभिना, अग्रहस्तेन हस्ताग्रेण, अपवार्य आच्छाद्य, चकितचकितेव भीतभीतेव, स्थिता तिष्ठति । अवधानं चित्तैकाग्र्यं तत्सहितं यथातथा निरूप्य सम्यङ्निध्याय, दास्याः पुत्रइति सोपालम्भं वचनं । "षष्ठ्या आक्रोशे" इत्यनेन षष्ठ्या अलुक् । पाटच्चरः चोरः । अभिलङ्घयति उल्लङ्घयति । वार्यतां अपोह्यतां ॥

एषेति ॥ कुसुमे पुष्पे, निषण्णा निलीना, अनुरक्ता त्वय्यनुरागयुक्ता च, किंच सती विद्यमानपतिव्रताच । एषा मधुकरी भ्रमरी, तृषितापि मधुरसपानाभिलाषवत्यपि, भवन्तं त्वां, प्रतिपालयति प्रतीक्षते भवत्सान्निध्यं अपेक्षतइत्यर्थः । त्वया विना त्वां उज्झित्वा, मधु मकरन्दं, न पिबति खलु नास्वादते हि । विशेषोक्तिरलंकारः । पद्यार्थो दृश्यम् ॥ १९

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सानु—अज्ज अभिजादं क्खु एसो वारिदो ।[1]

विदू—पेडिसिद्धावि वामा एसा जादी ।[2]

राजा—एवं भोः न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतम्मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेत् भ्रमरप्रियायाः
त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

विदू—एैव्वं तिक्खणदण्डस्स किं ण भाइस्सदि।[3] (प्रहस्य आत्मगतम्) एसो दाव उम्मत्तो । अहं वि एदस्स सङ्गेण ईदिसवण्णो विअ संवुत्तो। (प्रकाशम् ।) भो चित्तं खु एदं ।

राजा—कथं चित्रं ।

सानु—अहं वि दाणिं अवगदत्था । किं उण जहालिहिदाणुभावी एसो ।[4]

---

१. अद्य अभिजातं खल्वेषवारितः ।

२. प्रतिषिद्धापि वामा एषा जातिः ।

३. एवं तीक्ष्णदण्डस्य को न भेष्यति । एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदशवर्णः इव संवृत्तः । भोः चित्रं खल्वेतत् ।

४. अहमपीदानीं अवगतार्था । किं पुनर्यथा लिखितानुभावी एषः ।

---

अक्लिष्टेति ॥ हे भ्रमर मधुकर, अक्लिष्टः हस्तस्पर्शादिना ग्लानिं अनापन्नः यः बालतरुपल्लवः तरुणतरुकिसलयं, तद्वत् लोभनीयं स्पृहणीयं, रतोत्सवेषु सुरत-क्षणेषु, मया सदयमेव दयार्द्रहृदयं यथातथा पीतं आस्वादितं, अत्र एवकारः पाने दया राहित्यं नियमेन व्युदस्यति। तादृशं, प्रियायाः प्रेयस्याः, बिम्बाधरं बिम्बफल-समानं अधरं, स्पृशसि चेत्, त्वां भवन्तं, कमलस्य पद्मस्य, उदरं मध्यदेशएव, बन्धनं कारागृहं । तत्स्थं, कारयामि आपादयामि । उपमारूपकं च । वृत्तं वसन्त-तिलकम् ॥२०॥

एवमित्यादि ॥ तीक्ष्णदण्डस्य उग्रदण्डस्य, प्रहस्य उच्चैर्हासं कृत्वा । उन्मत्तः चित्तविभ्रमसहितः सङ्गेन संसर्गेण, ईदृशवर्णइव ईदृशस्वभावइव । संवृत्तः अभूवं । अवगतार्था ज्ञातार्था । लिखितमनतिक्रम्य यथालिखितं अनुभूतवानिति

राजा—वयस्य किमिदमनुष्ठितं पौरोभाग्यं ।

दर्शनसुखमनुभवतस्साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २१ ॥

(इति बाष्पं विकिरति ।)

सानु—पुव्वावरविरोही अपुव्वो एसो विरहमग्गो ।

राजा—वयस्य, कथमेवमविश्रान्त दुःखमनुभवामि ।

प्रजागरात् खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥

सानु—सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए ।

---

१. पूर्वापरविरोधी अपूर्वएषः विरहमार्गः ।

२. सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

---

यथालिखितानुभावी । पौरोभाग्यं दोषैकदृक्त्वं "दोषैकदृक् पुरोभागी" इत्यमरः ॥

दर्शनेति ॥ तन्मयेन शकुन्तलामयेन, हृदयेन मनसा, साक्षादिव प्रत्यक्षं शकुन्तलायामिव, दर्शनसुखं अवलोकनसौख्यं, अनुभवतः उपभुञ्जानस्य, मे मम, स्मृतिकारिणा संस्मरणोत्पादकेन, त्वया, गम, कान्ता प्रेयसी, पुनरपि भूयोऽपि चित्रीकृता आलेख्यरूपतामापादिता । उत्प्रेक्षा । पथ्यार्यावृत्तम् ॥ २१ ॥

पूर्वेत्यादि ॥ पूर्वापरविरोधी पूर्वं चित्रस्य चित्रत्वेन परिज्ञानं, पुनस्तस्योन्मादावस्थायां सत्यत्वेन ज्ञानं, पुनरपि स्मृतिसंवलितायां तस्यामेवावस्थायां चित्रत्वेनैव ज्ञानमिति पूर्वोत्तरविरुद्धः । अतएव अपूर्वः अननुभूतपूर्वः अयं अध्यक्षं अनुभूयमानः, विरहमार्गः विश्लेषसरणिः । अविश्रान्तं पर्यन्तरहितं ॥

प्रजागरादिति ॥ स्वप्ने स्वप्नदशायां तस्याः शकुन्तलायाः समागमः संश्लेषः, प्रजागरात् प्रकृष्टजागरणाद्धेतोः, खिलीकृतः नाशितः, बाष्पस्तु अश्रुप्रसरस्तु, चित्रगतामपि आलेख्यगतामपि, एनां शकुन्तलां द्रष्टुं आलोकितुं (अवसरं) न ददाति न यच्छति । हेत्वलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ २२ ॥

सर्वथेत्यादि॥ प्रत्यादेशदुःखं तिरस्कारजनिता व्यथा, प्रमार्जितं अपोहितं। वर्तिकाकरण्डकं तूलिकावर्णकादिभाण्डं, इतो मुखं एतद्देशाभिमुख्येन (क्रियाविशेष-

(प्रविश्य ।)

चतु—[1]जेदु जेदु भट्टा । वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थि अम्हि ।

राजा—किंच ।

चतु—[2]सो मे हत्थादो अन्तरा तरळिआदुदिआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्संति सबलक्कारं गहीदो ।

विदू—[3]दिट्ठिआ तुमं मुक्का ।

चतु—[4]जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वाहिदो अप्पा ।

राजा—वयस्य उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

---

१. वर्तिकाकरण्डकं गृहीत्वा इतोमुखं प्रस्थितास्मि ।

२. स मे हस्तात् अन्तरा तरलिकाद्वितीयया देव्या वसुमत्या अहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ।

३. दिष्ट्या त्वं मुक्ता ।

४. यावद्देव्या विटपलग्नं उत्तरीयं तरलिका मोचयति तावन्मया निर्वाहितः आत्मा ।

---

णमेतत् ) अन्तरा मध्येमार्गं, सबलात्कार हठात्कृत्येत्यर्थः। दिष्ट्या भाग्यातिशयेन विटपलग्नं शाखासक्तं, निर्वाहितः अपवाहितः, बहुमानेन, सम्मानेन, गर्विता संजातगर्वा, देवी, उपस्थिता प्राप्ता । प्रतिकृतिं चित्रफलकं, रक्षतु यथा तस्याः नयनगोचरं न भवेत् तथा गोपायतु इत्यर्थः । आत्मानं स्वशरीरं, इति भण कथय, अन्तःपुरं अवरोधवधूः सेव कालकूटं विषं तस्मात् यदा मोक्ष्यते मोचनं लप्स्यते तदा मां मेघप्रतिच्छन्दे तन्नाम्नि प्रासादे हर्म्ये शब्दापय आह्वय । अन्यसंक्रान्तहृदयोऽपि रूपान्तरासक्तोऽपि, प्रथमसंभावनां प्रथमं आदिनां गौरवभङ्गीम् ॥

विदू—[1]अत्ताणं ति भणाहि । (चित्रफलकमादायोत्थाय च ।) जइ भवं अन्ते उरकालकूडादो मुञ्चीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि ।

(इति द्रुतपदं निष्क्रान्तः ।)

सानु—[2]अण्णसंकन्तहिअओवि पढमसंभावणं अवेक्खदि सिढिल-सोहदो दाणिं एसो ।

(प्रविश्य पत्रहस्ता ।)

प्रतीहारी—[3]जेदु जेदु देवो ।

राजा—वेत्रवति, न खल्वन्तरा दृष्टा त्वया देवी ।

प्रतीहारी—[4]अह इं । पत्थहत्थं मं देक्खिअ पडिणिवुत्ता ।

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतीहारी—[5]देव अमच्चो विण्णवेदि । अत्थजादस्स गणणा बहु-ळदाए एक्कं एव्व पोरकज्जं अवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरे-दुत्ति ।

---

१. आत्मानमिति भण । यदि भवान् अन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय ।

२. अन्यसक्रान्तं हृदयोऽपि प्रथमसंभावनामवेक्षते शिथिलसौहार्द इदानीं एषः।

३. जयतु जयतु देवः ।

४. अथ किं । पत्रहस्तां मां दृष्ट्वा प्रतिनिवृत्ता ।

५. देवः अमात्यो विज्ञापयति । अर्थजातस्य गणना बहुलतया एकमेव पौरकार्यं अवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

---

जयत्वित्यादि॥ वेत्रवतीति प्रतीहार्याः नाम । न खलु दृष्टा इति शिरश्चा-लनपूर्वकः प्रश्नः । अथ किं ओं अङ्गीकारार्थकमव्ययमेतत् । पत्रहस्तां लेखहस्तां, कार्योपरोधं कार्यविघ्नं, अर्थजातस्य धनसमूहस्य, गणना बाहुल्यात् सङ्ख्यानाधि-

राजा—इतः पत्रिकां दर्शय ।

(प्रतीहारी अर्पयति ।)

राजा—(अनुवाच्य ।) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौ व्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचयइत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । बहुधनत्वात् बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचित् आपन्नसत्वा तस्य भार्यासु स्यात् ।

प्रतीहारी—[1]देव, दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

राजा—ननु गर्भः पित्र्यं रिक्थं अर्हति । गच्छ । एवममात्यं ब्रूहि ।

प्रतीहारी—[2]जं देवो आणवेदि । (इति प्रस्थिता ।)

राजा—एहि तावत् ।

प्रतीहारी—[3]इअह्मि ।

राजा—किमनेन सन्ततिरस्ति नास्तीति ।

---

१. देव इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते ।

२. यद्देवः आज्ञापयति ।

३. इयमस्मि ।

---

क्रयात्, समुद्रव्यवहारी सिन्धौ भाण्डाचितप्रवहणद्वारा क्रयविक्रयव्यवहारवान्, सार्थवाहः वणिक्, नौ व्यसने प्रवहणनाशे, विपन्नः नष्टः, तपस्वी वराकः, अर्थसंचयः धनसमूहः, अनपत्यता पुत्राभावः, आपन्नसत्वा गर्भिणी, दुहिता पुत्री, निर्वृत्तं अनुष्ठितं, पुंसवनं तदाख्यगर्भसंस्कारकर्म यस्यास्सा तादृशी । पित्र्यं पितृसंबन्धि, रिक्थं धनम् ॥

येन येन वियुज्यन्ते प्रजाः स्निग्धेन वन्धुना ।
स सपापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

प्रतीहारी—एव्वं णाम घोसइदव्वम्[1] । (निष्क्रम्य । पुनः प्रविश्य ।) काले पवुट्टं विअ अहिणन्दिदं देवस्स सासणं ।

राजा—(दीर्घं उष्णं च निश्वस्य ।) एवं भोः सन्ततिविच्छेदानिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः पुरमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रीरकालइवोप्तबीजा भूरेवंवृत्ता ।

प्रतीहारी—पडिहदं अमंगलं[2] ।

राजा—धिङ्मां उपस्थितश्रेयोऽवमानिनम् ।

सानु—असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा[3] ।

---

1. एवं नाम घोषयितव्यं । काले प्रवृष्टमिव अभिनन्दितं देवस्य शासनम् ।
2. प्रतिहतं अमङ्गलम् ।
3. असंशयं सखीं एव हृदये कृत्वा निन्दतः अनेनात्मा ।

---

येनेति । प्रजाः प्रकृतयः, स्निग्धेन प्रेमानुविद्धेन, येन येन वन्धुना, वियुज्यन्ते विश्लिष्यन्ते । सः सः वन्धुः, तासां प्रजानां, दुष्यन्तः इति घुष्यतां घोषणावादनेन, प्रकटीक्रियतां । न हि सामान्येनेत्याह पापादृते इति । पापं कर्म-विना स्त्रीणां भर्तृत्वेन विनेत्यर्थः ॥ २३ ॥

एवमित्यादि । काले उचितसमये, प्रवृष्टं (भावे क्तः) प्रकृष्टं वर्षणं, अभिनान्दतं आनन्दितं, विच्छेदः भङ्गः, तेन निरवलंबानां निराश्रयाणां, कुलानां वंशानां, मूलपुरुषस्य कुलकूटस्थस्य, अवसाने अन्ते, संपदः ऐश्वर्याणि, परं अन्यं, उपतिष्ठन्ति प्राप्नुवन्ति । अकाले असमये, उप्तबीजा आहितबीजा भूरिव क्षेत्रमिव एवंवृत्ता ईदृक् स्थितिं प्राप्ता अमङ्गलं अशिवं, प्रतिहतं नश्यतु इत्याशंसायां "आशंसायां भूतवच्च" इत्यनेन भूतार्थप्रत्ययः । उपस्थितस्य स्वत एव सन्निहितस्य श्रेयसः सगर्भशकुन्तलारूपस्य, अवमानिनं तिरस्कारकं, मां, धिक् ॥

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुंधरा काल इवोप्तबीजा ॥२४॥

सानु—अपरिच्छिण्णा दाणिं दे संददी हविस्सदि ।

चतु—( जनान्तिकम् । ) अए इमिणा सत्थवाहवुत्तन्देण दिउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छंदादो अज्जं माढव्वं गेण्हिअ आअच्छामि ।

प्रतीहारी—सुट्ठु भणासि । ( इति निष्क्रान्ता । )

राजा—अहो दुष्यन्तस्य संशयं आरूढाः पिण्डभाजः । कुतः ।

अस्मात् परं बत यथा श्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति ।

---

१. अपरिच्छिन्ना इदानीं ते सन्ततिर्भविष्यति ।

२. अये अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माढव्यं गृहीत्वा आगच्छामि ।

३. सुष्ठु भणसि ।

---

संरोपितेति॥ आत्मनि पुत्रगर्भरूपे मयि, संरोपिते तस्याः कुक्षौ उत्पादिते सति, "आत्मा वै पुत्रनामासि" इति श्रुतेः । कुलप्रतिष्ठा गर्भस्थेन शिशुना वंशोद्धरणात् कुलप्रतिष्ठा हेतुभूता, अतएव धर्मपत्न्यपि सा शकुन्तला, मया, त्यक्ता नाम । नामेति कुत्सने । तत्रौपम्यमाह कल्पिष्यमाणा इत्यादिना । काले समये, उप्तबीजा न्यस्तबीजा, अतएव महते फलाय, कल्पिष्यमाणा महाफलनिष्पादनसमर्था इत्यर्थः, वसुन्धरेव भूमिरिव । उपमा काव्यलिङ्गं च । विभावनाभेदश्च ॥ २४ ॥

अस्मादिति । बतेति खेदे । अस्मात् परं दुष्यन्तात् परं, यथाश्रुति श्रुत्युक्तविधानमनतिक्रम्य, सम्भृतानि निष्पादितानि, निवपनानि श्राद्धकर्माणि पिण्डतिलोदकदानानि वा, नः कुले कः करिष्यति विधास्यति । 'नियच्छतीति" इति पा-

नूनं प्रसूतिविकलेन मया प्रसिक्तं धौ-
ताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥

( इति मोहं उपगतः । )

चतु—( ससंभ्रममवलोक्य । ) [1]समस्ससदु भट्टा ।

साजु—[2]हद्धि हद्धी । सदि खु दीवे ववधाणदोसेण एसो अन्धआ-रदोसं अणुहोदि । अहं दाणिं एव्व णिव्वुदं करेमि । अह वा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्संति जह अइरेण धम्मपदिणिं भट्टा अहिण-न्दिस्सदित्ति । ता ण जुत्तं कालं पडिपालिदुं । जाव इमिणा वुत्तन्तेण पि-असहिं समस्सासेमि ।

( इत्युद्भ्रान्तकेन निष्क्रान्तौ । )

( नेपथ्ये । ) [3]अब्बह्मणं अब्बह्मणम्

---

१. समाश्वसितु भर्ता ।

२. हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति । अहमिदानीमेव निर्वृतं करोमि । अथ वा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात् यज्ञभागोत्सुका देवा एव तथाऽनुष्ठास्यन्ति यथा अचिरेण धर्मपत्नीं भर्ता अभिनन्दिष्यतीति । तन्न युक्तं कालं प्रतिपालयितुं । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ।

३. अब्रह्मण्यं अब्रह्मण्यम् ।

---

ठे तु ददातीत्यर्थः । दाणो यच्छादेशः । इति एवंप्रकारेण, प्रसूतिविकलेन पुत्रहीनेन, मया प्रसिक्तं दत्तं, धौतं क्षालितं अश्रुनेत्रांबु येन तत् तादृशं च तत् शेषं च धौताश्रुशेषं, तादृक् उदकं निवापसलिलं, पिबन्ति नूनं निश्चये । काव्यलिङ्गोत्प्रेक्षानुप्रासाः ॥ २५ ॥

**समाश्वसित्वित्यादि** ॥ समाश्वसितु चित्तस्थैर्यं आसादयतु । निर्वृतं सुखितं, महेन्द्रजननी इन्द्रमाता अदितिः । प्रतिपालयितुं प्रतीक्षितुं, उद्भ्रान्तकेन ससंभ्रमगत्या, अब्रह्मण्यं अहं अवध्यः मां मुञ्चइत्येवंरीतः उक्तिः । “अब्रह्मण्य-

राजा—( प्रत्यागतः कर्णं दत्वा । ) अये माढव्यस्येवार्तस्वरः । कः कोऽत्र भोः ।

(प्रविश्य । )

प्रतीहारी—( ससंभ्रमम् । ) परित्ताअदु देवो संसअगदं वअस्सं[1] ।

राजा—केनात्तगन्धो माणवकः । attacked

प्रतीहारी—अदिट्ठरूवेण केणवि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो[2] ।

राजा—( उत्थाय । ) मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथवा ।

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो वेदितुमस्ति शक्तिः ॥ २६ ॥

---

१. परित्रायतां देवः संशयगतं वयस्यम् ।

२. अदृष्टरूपेण केनापि सत्वेन अतिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्य अग्रभूमिं आरोपितः ।

---

सवध्योक्तौ" इत्यमरः। प्रत्यागतः प्रतिनिवृत्तः । अये इति । आकस्मिकवस्तुसम्भवजनितानन्दद्योतकमव्ययं । माढव्यः विदूषकस्य नाम । परित्रायतां रक्ष्यतां । आत्तगन्धः अभिभूतः, सत्वेन प्राणिना, अग्रभूमिं शिखरप्रदेशं, गृहाः आवासभूमिः ॥

अहनीति ॥ अहन्यहनि दिने दिने, आत्मनएव स्वस्यैव, प्रमादस्खलितं अनवधाननिबन्धनं अन्यथाचरणं, तावत साकल्येन ज्ञातुं अवगन्तुं, न शक्यं । एवकारव्यवच्छेद्यमाह । प्रजास्विति । प्रजासु मध्ये, कः केन पथा मार्गेण, प्रयाति गच्छति, इति अशेषतः सामस्त्येन, वेदितुं ज्ञातुं, शक्ति सामर्थ्यं, अस्ति किं । नास्त्येवेत्यर्थः । काव्यार्थापत्तिरलङ्कारः ॥ २६ ॥

( नेपथ्ये । )

भो वअस्स, अविहा अविहा ।

राजा—( गतिभेदेन परिक्रामन् । ) सखे न भेतव्यं न भेतव्यम् ।

( नेपथ्ये । )

( पुनस्तदेव पठित्वा । )

कहं ण भाइस्सं । एस मं कोवि पच्चवणदसिरोहरं उच्छुं विअ तिण्ण भङ्गं करेदि ।

राजा—( सदृष्टिक्षेपम् । ) धनुस्तावत् ।

( प्रविश्य शार्ङ्गहस्ता । )

यवनी—भट्टा, एदं हत्थावावसहिदं सरासणं ।

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये । )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।

---

१. भो वयस्य, अविहा अविहा ।

२. कथं न भेष्यामि । एष मां कोऽपि प्रत्यवनतशिरोधरं इक्षुमिव त्रिभङ्गं करोति ।

३ भर्तः एतद्धस्तावापसहितं शरासनम् ।

---

नेपथ्ये इत्यादि॥ अविहेति खेदे। संभ्रमात् द्विरुक्तिः। गतिभेदेन द्रुततरगतिभङ्ग्या । परिक्रामन् समन्तात् पर्यटन्, प्रत्यवनता पश्चात् अवनामिता शिरोधरा कन्धरा यस्य सः तं. इक्षुमिव पुण्ड्रेक्षुदण्डमिव, दृष्ट्योः नयनयोः क्षेपः समन्तात् प्रसारणं यस्मिन् कर्मणि तत् यथा तथा। तावत् वाक्यालङ्कारे । हस्तावापः ज्याघातपरित्राणार्थं गोधात्वचाविरचितं अङ्गुलित्राणं, आदत्ते लक्ष्यवेधनार्थं हस्ते गृह्णाति॥

एष इति ॥ अभिनवं नूतनं यत् कण्ठशोणितं गलरुधिरं, तत् अर्थयते अपेक्षते इति अभिनवकण्ठशोणितार्थी, तादृशः एषः अहं, शार्दूलः व्याघ्रः, पशुमिव गामिव, चेष्टमानं भ्राम्यन्तं, त्वां हन्मि हिनस्मि । आर्तानां दीनानां आपन्ना-

आर्तानां भयमपनेतुमात्तधन्वा दुष्यन्त-
स्तव शरणं भवत्विदानीम् ॥ २७ ॥

राजा—( सरोषम् । ) कथं मामेवोद्दिशति । तिष्ठ कुणपाशन, त्व-मिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य । ) वेत्रवति सोपानमार्गमादेशय ।

प्रतीहारी—ईदो इदो देवो ।

( सर्वे सत्वरमुपसर्पन्ति । )

राजा—( समन्ताद्विलोक्य । ) शून्यं खल्विदम् ।

( नेपथ्ये । )

अविहा अविहा । अहं अत्तभवन्तं पेक्खामि । तुमं मं ण पेक्खसि । विडालगहीदो मूसिओ विअ णिरासो म्हि जीविदे संवुत्तो ।

राजा—भोस्तिरस्करिणीगर्वित, मदीयं शस्त्रं त्वां द्रक्ष्यति । एष तमिषुं सन्दधे ।

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षति च द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २८ ॥

( इत्यस्त्रं सन्धत्ते । )

---

१. इत इतः देवः ।

२. अविहा अविहा । अहमत्रभवन्तं पश्यामि । त्वं मां न पश्यसि । विडालगृही-तो मूषिक इव निराशोऽस्मि जीविते संवृत्तः ।

---

नां वा, भयं, अपनेतुं अपोहितुं, आत्तधन्वा गृहीतचापः "धनुषश्च" इति सूत्रेण समासान्तोऽनङ् । दुष्यन्तः, इदानीं संप्रति, तव शरणं रक्षकः भवतु । हेत्वलङ्कारः उपमा च प्रहर्षिणीवृत्तम् ॥ २७ ॥

**कथमित्यादि** ॥ उद्दिशति लक्ष्यति । कुणपाशन राक्षस । न भविष्य-सि नङ्क्ष्यसीत्यर्थः । शार्ङ्गं चापं, आरोप्य संधाय, आदेशय प्रदर्शय । शून्यं निर्जनं, विडालेन मार्जारेण, गृहीतः आक्रान्तः, मूषिकः आखुः, तिरस्करिणी स्वरूपतिरो-धानसाधनीभूता विद्या, तया गर्वित दृप्त, इषुं शरम् ॥

**य इति** ॥ यः इषुः, वध्यं हन्तव्यं, त्वां, हनिष्यति रक्ष्यं पालनीयं द्विजं ब्राह्मणं च, रक्षति पाति । दृष्टान्तमाह । हंसः मरालः, क्षीरं दुग्धं, आदत्ते गृह्णाति,

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः ।)

मातलिः—

कृताश्शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाश्शराः ॥ २९ ॥

राजा—(अस्त्रमुपसंहरन् ।) अये मातलिः । स्वागतं महेन्द्रसारथये ।

(प्रविश्य ।)

विदू.—अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि ।

मातलिः—(सस्मितम् ।) आयुष्मन् श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिः दुर्जयो नाम दानवगणः ।

राजा—अस्ति श्रुतपूर्वं मया नारदात् ।

---

१. अहं येन इष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते ।

---

तन्मिश्राः क्षीरमिश्राः, अपः जलानि, वर्जयति रहयति । दृष्टान्तालङ्कारः ॥ २८ ॥

कृता इति ॥ हरिणा इन्द्रेण, तव भवतः, असुराः दैत्याः, शरव्यं लक्ष्यं, कृताः कल्पिताः । तेषु असुरेषु, इदं शरासनं धनुः, विकृष्यतां । सुहृज्जने मित्रे, जात्येकवचनं । प्रसादेन करुणया सौम्यानि मनोज्ञानि चक्षूंषि नयनानि, पतन्ति । दारुणाः उग्राः, शराः बाणाः, न न पतन्त्येव ॥

अस्त्रमित्यादि ॥ उपसंहरन् प्रतिसंहरन्, अये इति विस्मये, इष्टिः यागः तत्संबन्धी पशुः इष्टिपशुः, इष्टिपशुं मारयित्वेव इष्टिपशुमारं, अभिनन्द्यते स्वाग-

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्त सप्तिः
तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः सम्भावनया । अथ माढव्यं प्रति भवता किमेवं प्रयुक्तम् ।

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनस्सन्तापात् आयुष्मान् मया विक्लवो दृष्टः । पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

---

तद्वचनविचारादिना अभिद्रूयते इत्यर्थः । हरिणा इन्द्रेण, अवहितः सावधानः, कालनेमेः प्रसूतिः उत्पत्तिः यस्य सः तादृशः ॥

सख्युरिति ॥ सः तादृग्दानवगणः, ते, सख्युः मित्रस्य, शतक्रतोः इन्द्रस्य, अजय्यः किल जेतुं अशक्यः किलेति सभावनायां "वार्तासम्भाव्ययोः किल" इत्यमरः । "क्षय्यजय्यौ शक्यार्थे" इत्यनेन निपातनात् क्षय्येति रूपं त्वं भवान्, तस्य दानवगणस्य हन्ता घातुकः हन्तृत्वेन, रणशिरसि समरमूर्धनि स्मृतः। तत्र दृष्टान्तमाह । सप्त सप्तसंज्ञाकः सप्तिः अश्वः यस्य सः सप्तसप्तिः सूर्यः, यत् तिमिरं, उच्छेत्तुं नाशयितुं, न प्रभवति न समर्थोऽस्ति, तत् तादृशं, नैशं निशासंबन्धि, तिमिरं अन्धकारं, चन्द्रः, अपाकरोति निरस्यति । दृष्टान्तालङ्कारः॥ प्रहर्षिणीवृत्तम् ॥ ३० ॥

स इत्यादि ॥ आत्तं गृहीतं शस्त्रं आयुधं येन सः । मघवतः इन्द्रस्य संभावनया गौरवेण, माढव्यं प्रति विदूषकमुद्दिश्य, किं किमर्थं, एवं इत्थं, भवता, प्रयुक्तं कृतं, विक्लवः विह्वलः ॥

ज्वलति चलितेन्धनोऽग्निः विप्रकृतः पन्नगः फणं कुरुते ।
प्रायस्स्वं महिमानं कोपात् प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—( जनान्तिकम् । ) वयस्य अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत् परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्याप्टतं धनुः ॥ ३२ ॥

इति ।

विदू—जं भवं आणवेदि ।

मातलिः—आयुष्मान् रथमारोहतु ।

( राजा रथाधिरोहणं नाटयति )

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीमहाकविकालिदासकृतौ अभिज्ञानशाकुन्तले षष्ठोऽङ्कः ॥

---

१. यद्भवानाज्ञापेति ।

---

ज्वलतीति ॥ अग्निः वह्निः, चलितानि संचालितानि इन्धनानि एधांसि यस्य सः तादृशस्सन् , ज्वलति दीप्यते । पन्नगः सर्पः, विप्रकृतः अपकृतस्सन् , फणं फटां, कुरुते । जनः प्राणी, प्रायः बाहुल्येन, स्वं महिमानं निजमाहात्म्यं, कोपात् क्रोधात् , प्रतिपद्यते हि लभते खलु । अर्थान्तरन्यासः । दृष्टान्तालङ्कारश्च ॥ ३१ ॥

त्वन्मतिरिति ॥ केवला असहाया, त्वन्मतिः त्वदीयाबुद्धिः, तावत् साकल्येन, प्रजाः प्रकृतीः, परिपालयतु रक्षतु । अधिज्यं ज्याबन्धसहितं, इदं धनुः एतच्चापदण्डः, अन्यस्मिन् कर्मणि कार्यान्तरे, व्याप्टतं आसक्तं, अभूदिति शेषः ॥ ३२ ॥

इति अभिज्ञानशाकुन्तलव्याख्यायां षष्ठोऽङ्कः ॥

## सप्तमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च)

**राजा**—मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषात् अनुपयुक्तमिवात्मानं समर्थये ।

**मातलिः**—(सस्मितम्) आयुष्मन्, उभयमप्यपरितोषं समर्थये ।

प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघुमन्यते भवान् ।
गणयत्यपदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥१॥

**राजा**—मातले, मामैवं । स खलु मनोरथानामप्यभूमिः विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षं अर्धासनोपवेशितस्य ।

---

इतो निर्वहणसन्धिः आग्रन्थसमाप्ति । तल्लक्षणन्तु । "वीजवन्तो मुखाद्यर्थाः विप्रकीर्णाः यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।" इति । अस्य त्वङ्गानि चतुर्दश ॥

**ततइत्यादि** ॥ आकाशयानं विमानं, मातलिः तन्नामा इन्द्रसारथिः । अनुष्ठितः आचरितः निदेशः इन्द्राज्ञा येन तादृशोऽपि, मघवतः इन्द्रस्य, सत्क्रिया सम्मानना, अनुपयुक्तामिव इन्द्रकार्ये अविनियुक्तमिव, समर्थये मन्ये इत्यर्थः । उभयं वासवं भवन्तमपि, अपरितोषं सन्तोषहीनं समर्थये अवधारयामि । तदेव दर्शयति । **प्रथमेत्यादिना** ॥ प्रथमोपकृतं इन्द्रोद्देशेन पुरतः कृतं उपकारं, भवान्, मघवतः प्रतिपत्त्या इन्द्रस्य गौरवेण, लघु अल्पं यथा तथा, मन्यते गणयति । अपदानेन भवदनुष्ठितेन रणकर्मणा, विस्मितः चित्रीयमाणः सोऽपि इन्द्रोऽपि, भवतः भवद्विषये स्वेन विरचितान्, सत्क्रियागुणान् सम्माननादरातिशयादीन्, न मन्यते न गणयति, महाप्रभावस्यास्य राजर्षेः प्रभावमहिमानुगुणं किं वा मया सत्कृतं, न किंचिदपीत्यात्मनि अपरितोषमेव भावयतीत्यर्थः । वियोगिनी वृत्तं । "विषमे ससजागुरुस्समे सभरालोऽथगुरुर्वियोगिनी" इति लक्षणात् ॥ पदार्थहेतुकं काव्यलिङ्गं अलङ्कारः ॥ १ ॥

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ २ ॥

मातलिः—किमिव नाम आयुष्मानमरेश्वरान्नार्हति । पश्य ।

सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तवशरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरानखैः ॥ ३ ॥

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिद्ध्यन्तिं कर्मसु महत्स्वपि यन्नियोज्याः
स्सम्भावनागुणमवैहि तमीश्वराणाम् ।

---

अन्तरिति ॥ अन्तर्गता हृद्गता, प्रार्थना मन्दारमालाविषयिणी याञ्चा यस्य सः तं, अन्तिके समीपे तिष्ठति इति अन्तिकस्थः तं, जयन्तं तन्नामानं स्वपुत्रं, उद्वीक्ष्य आलोक्य, कृतं, स्मितं मन्दहासः येन तादृशेन, (दुष्यन्ते राज्ञि त्वदपेक्षया ममैव प्रीतिरभ्यधिकेति मन्दहासेन सूचयतेति भावः) तादृशेन हरिणा इन्द्रेण, आमृष्टं समन्तात् स्पृष्टं वक्षो हरिचन्दनं उरस्स्थलधृतार्द्रचन्दनं तदेव अङ्कः चिह्नं यस्यास्सा, तादृशी, मन्दारमाला मन्दाराख्यसुरद्रुमोत्पन्नकुसुमग्रथितमाला, पिनद्धा स्वयं मम कण्ठे परिधापिता । अप्युपसृष्टान्नहेः कर्मणि निष्ठायां रूपं । "वष्टि-वागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यनेन अपेराद्यक्षरलोपश्च । परिकरालङ्कारः । वृत्त उपजातिः । तल्लक्षणन्तु "अनन्तरोदीरितलक्ष्मभाजः पादायदीया उपजात-यस्ताः ।" इति ॥ २ ॥

सुखेति ॥ सुखं परं प्रधानं यस्य तस्य, हरेः इन्द्रस्य, संबन्धि, त्रिदिवं स्वर्गः उभयैरेव द्वाभ्यामेव, उद्धृताः समूलघातं नाशिताः दानवाः असुररूपाः कण्टकाः यस्मात्तत् तादृशं, कृतं । उभयशब्दस्य द्विवचनं नास्तीति कैयटः । तन्मतानु-सारेण अयं प्रयोगः । कैरुभयैरित्यतआह । तवेति । अधुना इदानीं, न तानि भुग्नानि पर्वाणि ग्रन्थिप्रदेशाः येषां ते तादृशैः, तव त्वत्संबन्धिभिः शरैः विशिखैः करणैः, पुरा प्राक्, पुरुषकेसरिणः नृसिंहस्य, नखैश्च । अत्रापि नतपर्वभिः इति विशेषणं योजनीयं अर्थस्तु न तं न मनं पर्वणः सकाशात् येषां तैः इति काव्यलिङ्गं । द्रुतविलम्बितवृत्तम् ॥ ३ ॥

सिद्ध्यन्तीति ॥ नियोज्याः भृत्याः, महत्सु दुस्साधेषु, कर्मस्वपि कार्ये-ष्वपि, सिद्ध्यन्ति फलभाजो भवन्तीति यत् तं; ईश्वराणां प्रभूणां, सम्भवगुणाना

किं वाऽभविष्यदरुणस्तमसां विभेत्ता
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलिः—सदृशमेवैतत् (स्तोकमन्तरमतीत्य) आयुष्मन्, इतः पश्य नाकपृष्ठ प्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैस्सुरसुन्दरीणां वर्णैरमीकल्पलतांशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

राजा—मातले, असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवं अधिरोहता न लक्षितः स्वर्गमार्गः । कतरस्मिन् मरुतां पथि वर्तामहे ।

मातलिः—
त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।

---

गौरवमहिमानं, अवेहि जानीहि । प्रभुमहत्वेनैव कार्यसिद्धिः तत्र सेवकगुणः कोऽपि नास्तीत्यर्थः । अत्र दृष्टान्तमाह । किं वेति । सहस्रकिरणः सूर्यः, धुरि पुरोभागे । तं अनूरुं, नाकरिष्यच्चेत् न न्यधास्यच्चेत्, सः अरुणः अनूरुनामा सूर्यसारथिः तमसां अन्धकाराणां, विभेत्ता भेदकः (कर्मणि षष्ठी) अभविष्यत् किं वा, न कदापि तमो विभेदनसमर्थो भवेदिति भावः । दृष्टान्तालङ्कारः । वसन्ततिलकं वृत्तम् ॥४॥

विच्छित्तीति ॥ अमी दिवौकसः देवाः सुरसुन्दरीणां देववनितानां, विच्छित्तिशेषैः अङ्गरागावशेषैः, "विच्छित्तिरङ्गरागेऽपि हरविच्छेदयोरपि" इति विश्वः । यक्षकर्दमादिभिरित्यर्थः । स्वहस्तेन तासां अङ्गरागं कृत्वा अवशेषितैरित्यनेन त्वच्चरितानामतिप्रियत्वं सूचितं । वर्णैः सितपीतादिभिः वर्णकैः, (करणैः) कल्पलतांशुकेषु सुरतरुशाखासकाशात् अधिगतेषु क्षौमेषु गीतक्षमं गानार्हं, अर्थजातं अभिधेय समूहं, विचिन्त्य समालोच्य, त्वच्चरितं त्वदपदानं, लिखन्ति । त्वदीयचरितानि गीतनिबद्धानि कृत्वा, लिखन्तीत्यर्थः । उपजातिवृत्तम् ॥ ५ ॥

त्रिस्रोतसमिति ॥ यः, त्रिस्रोतसं गङ्गां, गगने आकाशे प्रतिष्ठा स्थितिः यस्यास्सा तां, तादृशीं, वहति बिभर्ति । ज्योतींषि सूर्यचन्द्रनक्षत्रादीन् ज्योतिर्ग्रहांश्च,

तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

राजा—मातले, अतः खलु सबाह्यकरणः ममान्तरात्मा प्रसीदति । (रथाङ्गमवलोक्य) मेघपदवीं अवतीर्णौ स्वः ।

मातलिः—कथमवगम्यते ?

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भिः
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

मातलिः—क्षणादायुष्मानधिकारभूमौ वर्तिष्यते ।

राजा—(अधोऽवलोक्य ।) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथा हि ।

---

प्रत्रिभक्तः अयोन्यासंवलिताः रश्मयः किरणाः यस्मिंस्तद्यथा तथा, वर्तयति अवस्थापयति । तस्य तादृशस्य, परिवहस्य तन्नाम्नः, वायोः गन्धवहस्य, इमं मार्गं सरणिं, द्वितीयः यः हरिविक्रमः त्रिविक्रमपदक्रमणं तेन निस्तमस्कं अनघं पावनं, वदन्ति, महान्तः इति शेषः । स्वभावोक्तिः । वसन्ततिलकं वृत्तम् ॥ ६ ॥

अयमिति ॥ शीकरैः जलकणैः, क्लिन्ना आर्द्रा नेमिः चक्रप्रान्तदेशः, यस्य, तादृशः, ते त्वत्संबन्धी, अयं, रथः, (कर्ता) अराणां चक्रमध्यवर्तिकाष्ठानां, विवरेभ्यः रन्ध्रेभ्यः, निष्पतद्भिः बहिः उद्गच्छद्भिः, चातकैः तदाख्यैः वर्षोदकपारणाव्रतधारिभिः पक्षिभिः, (हेतुभिः) अचिरभासां विद्युतां, तेजसा प्रभया, अनुलिप्तैः व्याप्तैः, हरिभिः अश्वैश्च, वारिगर्भोदराणां जलभरितकुक्षीणां, घनानां मेघानां, उपरि ऊर्ध्वे, गतं गमनं (कर्म) पिशुनयति सूचयति । हेत्वलंकारः । मालिनी वृत्तम् ॥ ७ ॥

शैलानामवरोहतीव शिखराद्दुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्तानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मातलिः—साधु दृष्टम् । (सबहुमानमवलोक्य ।) अहो उदाररमणीया पृथिवी ।

राजा—मातले कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सान्ध्यइव मेघपरिघः सानुमानालक्ष्यते ।

मातलिः—आयुष्मन्, एष खलु हेमकूटो नाम किंपुरुषपर्वतः तपस्संसिद्धिक्षेत्रम् । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुस्सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

---

शैलानामिति ॥ उन्मज्जतां ऊर्ध्वं उत्पततां, शैलानां पर्वतानां, शिखरात् शृङ्गात्, मेदिनी भूमिः, अवरोहतीव अवतरतीव । पादपाः वृक्षाः, स्कन्धानां प्रकाण्डानां, उदयात् अभिव्यक्तेः, पर्णानां पत्राणां, अभ्यन्तरे मध्ये लीनतां प्रच्छन्नतां, विजहति त्यजन्ति (दूरतो दर्शनसमये पर्णमात्रेण ये दृष्टाः तएवेदानीं सविधदेशाधिष्ठाने शाखाद्यवयवसंस्थानविशेषविशिष्टाः तरवः विराजन्ते इति भावः । ) तनुभावेन कार्श्येन नष्टसलिलाः जलाभिव्यक्तिरहिताः, आपगाः नद्यः, सन्तानैः विस्तारैः, अर्थात् दृष्टैरित्यर्थः । व्यक्तिं प्राकाश्यं, व्रजन्ति प्राप्नुवन्ति । उत्क्षिपता ऊर्ध्वीकुर्वता, केनापि, मर्त्यभुवनं मनुष्यलोकः भूमण्डलमिति यावत् । मत्पार्श्वं मत्समीपं, आनीयते प्राप्यते । इव । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

साध्वित्यादि ॥ सबहुमानं सगौरवं अहो आश्चर्ये । उदारा उज्वला रमणीया मनोज्ञा चेति कर्मधारयः । अवगाढः अवगाहनं कुर्वाणः व्याप्नुवन्नित्यर्थः। कनकरसः स्वर्णद्रवः । सन्ध्यायां भवः सान्ध्यः सानुमान् पर्वतः ॥

स्वायंभुवादिति ॥ स्वयंभुवः ब्रह्मणः अपत्यं पुमान् स्वायंभुवः, मरीचेः मरीचिप्रजापतेः, यः प्रजापतिः जगत्स्रष्टा, प्रबभूव उत्पन्नः । सुराणां देवानां असुराणां दानवानां च गुरुः पिता मारीचः काश्यपइत्यर्थः, सपत्नीकः भार्यासमेतस्सन्, अत्र अस्मिन् पर्वते, तपस्यति तपः आचरति ॥ ९ ॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुं इच्छामि ।

मातलिः—प्रथमः कल्पः ।

(नाट्येनावतीर्णौ ।)

राजा—(सविस्मयम् ।)

उपोढशब्दा न रथाङ्गनेमयः प्रवर्धमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धतस्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १०

मातलिः—एतावानेव शतक्रतोरायुष्मतश्च विशेषः ।

राजा—मातले कतमस्मिन् प्रदेशे मारीचाश्रमः ।

मातलिः—(हस्तेन दर्शयन् ।)

वल्मीकार्धनिमग्नमूर्तिरुरसा सन्दष्ट सर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडनिचितं विभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११॥

---

उपोढेति ॥ रथाङ्गस्य चक्रस्य, नेमयः धाराः उपोढः स्वीकृतः शब्दः ध्वनिः याभिस्ताः तादृशाः, न, सन्ति इति शेषः । प्रवर्धमानं वृद्धिमश्नुवानं, रजः भूपरागोऽपि न च दृश्यते न लक्ष्यते । अभूतलस्पर्शतया अवनितलसंबन्धाभावेन, (हेतुना) निरुद्धतः औद्धत्यरहितः तव रथः स्यन्दनं (कर्म) अवतीर्णोऽपि न लक्ष्यते अवतीर्णत्वेन न ज्ञायते इत्यर्थः । विरोधाभासः ॥ १० ॥

वल्मीकेति ॥ वल्मीके वामलूरौ अर्धनिमग्ना कटिपर्यन्तं अवमग्नामूर्तिः शरीरं यस्य सः, सन्दष्टा सम्यक् संश्लिष्टा सर्पत्वक् भुजङ्गनिर्मोकः यस्मिन् तेन, उरसा वक्षसा (उपलक्षितः) जीर्णानां पुरातनानां लतानां वीरुधां, प्रतानं समूहः तद्रूपेण वलयेन तद्वेष्टनेनेति यावत् । कण्ठे ग्रीवायां, अत्यर्थं सुतरां संपीडितः दृढं संबद्धः, अंसयोः भुजशिखरयोः अंसौ वा व्याप्नोतीति अंसव्यापि, शकुन्तानां पक्षिणां नीडैः कुलायैः निचितं नीरन्ध्रं यथा तथा व्याप्तं, जटामण्डलं जटाभारं, बिभ्रत् धरन्, असौ मुनिः ऋषिः, स्थाणुरिव निश्शाखः तरुस्कन्धइव, अचलः निस्स्पन्दः सन्, यत्र यस्मिन् देशे, अभ्यर्कबिम्बं सूर्यमण्डलस्य आभिमुख्येन स्थितः । सः मारीचाश्रमः इति पूर्वेण योजना ॥ ११ ॥

राजा—नमस्ते कष्टतपसे ।

मातलिः—( संयतप्रग्रहं रथं कृत्वा । ) महाराज, एतावदिति परिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

राजा—स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

मातलिः—( रथं स्थापयित्वा । ) अवतरत्वायुष्मान् ।

राजा—( अवतीर्य । ) मातले भवान् कथमिदानीम् ।

मातलिः—संयन्त्रितो मया रथः वयमप्यवतरामः । (तथा कृत्वा) इत आयुष्मन् । ( परिक्रम्य । ) दृश्यन्तां अत्रभवतां ऋषीणां तपोवनभूमयः ।

राजा—ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १२

---

नमस्ते इत्यादि ॥ कष्टं कृच्छ्रं तपः व्रतानुष्ठानं यस्य सः कष्टतपाः तस्मै । संयताः सम्यगाकृष्टाः प्रग्रहाः अभीशवः यस्मिन् तं तादृशम् ॥

प्राणानामिति ॥ सन्तः विद्यमानाः कल्पवृक्षाः यस्मिन् तादृशे वने, उचिता अवश्यकर्तव्या, प्राणानां वृत्तिः प्राणधारणक्रिया, अनिलेन वायुना । न तु वृक्षफलादिना । काञ्चनपद्मानां स्वर्णतामरसानां रेणुभिः परागैः कपिशे पीतवर्णे, तोये तीर्थे, धर्माभिषेकक्रिया वर्णाश्रमधर्मानुष्ठानाङ्गभूतः स्नानविधिः । रत्नशिलातलेषु वैडूर्यपद्मरागादिशिलापट्टेषु, ध्यानं ब्रह्मानुचिन्तनं, विबुधस्त्रीसन्निधौ देवयोषित्समीपएव, संयमः इन्द्रियनियमनं, अन्यमुनयः भूतलवासिनः महर्षयः, यत् यत् स्थलं (कर्म) तपोभिः व्रतोपवासादिभिः काङ्क्षन्ति वाञ्छन्ति । तस्मिन् अमी तपस्यन्ति । सर्वोत्तमान् सन्निहितान् भोगान् तृणायापि न मन्यमानास्सन्तः इतोऽप्यधिकां महर्द्धिं आशंसमानाः तीव्रं तपः अनुतिष्ठन्तीति भावः । विशेषोक्तिः ॥ १२ ॥

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना । (परिक्रम्य । आकाशे) अये वृद्धशाकल्य, किमनुतिष्ठति भगवान् मारीचः। किं ब्रवीषि । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

राजा—( कर्णं दत्वा । ) अये प्रतिपाल्यावसरः खलु प्रस्तावः ।

मातलिः—( राजानं अवलोक्य । ) अस्मिन्न शोकमूले तावदास्तामायुष्मान् यावत् त्वामिन्द्रगुरवे निवेदयितुं अन्तरान्वेषी भवामि ।

राजा—यथा भवान् मन्यते । ( इति स्थितः । )

मातलिः—आयुष्मन् साधयाम्यहम् ।

( इति निष्क्रान्तः । )

राजा—( निमित्तं सूचयित्वा । )

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥

( नेपथ्ये । ) मा खु चावलं करेहि । कहं गदो एव्व अत्तणो पक्किदिं ।

राजा—( कर्णं दत्वा । ) अभूमिरियमविनयस्य । को नु खल्वेष

---

१. मा खलु चापलं कुरु । कथं गतएवात्मनः प्रकृतिम् ।

---

उत्सर्पिणीत्यादि ॥ उत्सर्पिणी उपर्युपरि गमनशीला । इन्द्रगुरवे महेन्द्रजनकाय, अन्तरान्वेषी अवसरप्रतीक्षी, साधयामि गच्छामि । निमित्तं शुभसूचकं दक्षिणबाहुस्पन्दनरूपम् ॥

मनोरथायेति ॥ अहं, मनोरथाय अभीष्टाय वस्तुने, नाशंसे न इच्छामि। हे बाहो किं, वृथा मुधा, स्पन्दसे स्फुरसि । पूर्वावधीरितं प्रथमतः तिरस्कृतं, श्रेयः श्रेयोनिमित्तं वस्तु, दुःखं दुःखरूपेण, परिवर्तते हि परिणमति खलु । अर्थान्तरन्यासः । वाक्यार्थहेतुकं काव्यलिङ्गम् वा ॥ १३ ॥

मा खल्वित्यादि ॥ चापलं अविनयं, आत्मनः स्वस्य, प्रकृतिं स्वभावं, अभूमिः अस्थानं निषिध्यते निरुध्यते । सविस्मयं साश्चर्यम् ॥

निषिध्यते । ( शब्दानुसारणावलोक्य । सविस्मयम् । ) अये को नु खल्वयं अनुबध्यमानस्तपस्विनीभ्यां अबालसत्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

**बालः**—[1]जिम्भ सिङ्घ, दन्ताइं दे गणइस्सम् ।

**प्रथमा**—[2]अविणिद, किं णो अवच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि । हन्त वड्ढइ दे संरंभो । ठाणे खु इसिजणेण सव्वदमणोत्ति किदणामहे ओसि ।

**राजा**—किं नु खलु बालेऽस्मिन्नौरसइव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति । in the sense of affection.

**द्वितीया**—[3]एसा खु केसरिणी तुमं लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि ।

---

१. जृम्भस्व सिंहदन्तांस्ते गणयिष्यामि ।
२. अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्वानि विप्र करोषि । हन्त वर्धते तव संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमनइति कृतनामधेयोऽसि ।
३. एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।

---

**अर्धेति** ॥ मातुः जनन्याः सिंह्याः इति यावत् । अर्धं पीताः आस्वादिताः स्तनाः येन सः तं, सिंहशिशुं हरिणाकिशोरकं, प्रक्रीडितुं विहर्तुं, बलात्कारेण हठात्, आमर्देन सम्मर्देन, क्लिष्टाः शीर्णाः केसराः स्कन्धरोमाणि यस्मिन् कर्मणि तद्यथा तथा कर्षति ॥ १४ ॥

**ततइत्यादि** ॥ जृम्भस्व जृम्भां कुरुष्व, गणयिष्यामि एकादिक्रमेण परिगणयिष्यामि । अविनीत दुर्ललित, अपत्यनिर्विशेषाणि औरससदृशानीति यावत्, सत्वानि प्राणिनः । विप्रकरोषि पीडयसि, सर्वान् प्राणिनः स्वशक्त्या दमयति मर्दयतीति सर्वदमनः । अनपत्यता न विद्यते अपत्यं यस्य सः अनपत्यः तस्य भावः । वत्सलयति वात्सल्यवन्तं करोति । केसरिणी सिंही, लङ्घयिष्यति बलात् त्वदुपरि निपत्य त्वां हिंसिष्यति ॥

बालः—( सस्मितम् । ) अह्मो वलिअं खु भीदोम्हि ।[1]

( इत्यधरं दर्शयति । )

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोऽपेक्षइव स्थितः ॥ १५ ॥

प्रथमा—वच्छ, एदं बालमिअन्दअं मुञ्च । अवरं दे कीळणअं दाइस्सम् ।[2]

बालः—कहिं देहिणं ।[3]

( इति हस्तं प्रसारयति । )

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य ।

प्रलोभ्यवस्तु प्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

---

१. अहो बलवत् खलु भीतास्मि ।
२. वत्स, एतं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।
३. कुत्र देह्येतत् ।

---

महत इति॥ अयं पुरो दृश्यमानः, बालः शिशुः, एधः काष्ठं तत्र अपेक्षा यस्य सः, तादृशस्सन्, स्फलिङ्गावस्थया सूक्ष्मशकलावस्थया, स्थितः विद्यमानः, वह्निरिव अग्निरिव, महतः तेजसः प्रभूतस्य धाम्नः अमितपराक्रमशक्तेरिति यावत् । बीजं बीजवत् आरंभकः, मे, प्रतिभाति भासते । उपमालङ्कारः ॥ १५ ॥

प्रलोभ्येति॥ प्रलोभ्ये प्रलोभजनके वस्तुनि, यः प्रणयः याञ्चा, प्रेमा वा, तेन प्रसारितः विस्तारितः । जालेषु रन्ध्रदेशेषु ग्रथितः संश्लिष्टाः अङ्गुलयः करशाखाः यस्य सः। अयं करः करतलमिति यावत् । इद्धः दीप्तः अभिवृद्धो वा रागः रक्तिमा यस्यास्सा तया, नवोषसा अचिरोद्गतप्रत्यूषेण, भिन्नं विकासमापादितं अलक्ष्याणि सम्यगविकासात् अदृश्यानि पत्रान्तराणि दलमध्यप्रदेशाः यस्य तत् तादृशं, एकपङ्कजमिव केवलं तामरसमिव, भातीति क्रियापदमध्याहार्यम् ॥ १६ ॥

द्वितीया—¹सुव्वदेणं सक्को एसो वाआमेत्तेण विरमाविदुं । गच्छ तुमं ममकेरए उडए मक्कण्डेअस्स इसिउमारस्स वण्णचित्तिदो मित्ति आमोरओ चिट्ठदि । तं से उवहर ।

प्रथमा—²तह । ( इति निष्क्रान्ता । )

बालः—³इमिणा एव्व दाव कीलिस्सं ।

( इति तापसीं विलोक्य हसति । )

राजा—स्पृहयामि खलु दुर्ललितायास्मै !

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचः प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनी भवन्ति ॥ १७ ॥

---

१. सुव्रते न शक्य एषः वाचामात्रेण विरमयितुं । गच्छ त्वं मदीये उटजे मार्कण्डेयस्य ऋषिकुमारकस्य वर्णचित्रितः मृत्तिका मयूरस्तिष्ठति । तमस्योपहर ।

२. तथा ।

३. अनेनैव तावत् क्रीडिष्यामि ।

---

सुव्रते इत्यादि ॥ विरमयितुं निवर्तयितुं । वर्णैः नानाविधैः लेपनद्रव्यैः, चित्रितः अलङ्कृतः, मृत्तिकया मृदा रचितः कृतः मयूरः मृत्तिकामयूरः, उपहर आनय दुर्ललिताय अविनीताय ॥

आलक्ष्येति ॥ अनिमित्तहासैः निर्हेतुकहसनैः, आलक्ष्याः ईषद्दृश्याः दन्ताः मुकुलाः कुड्मला इव येषां तान् । अव्यक्तैः अस्पष्टोच्चारितैः वर्णैः अक्षरैः रमणीयाः वचः प्रवृत्तयः उक्तिप्रसरणानि येषां तान्, अङ्कस्य उत्सङ्गस्य आश्रयः आश्रयणं तत्र प्रणयः अभ्यर्थना प्रेमा वा एषां अस्तीति तादृशान्, तनयान् पुत्रान्, वहन्तः उत्सङ्गेन धरन्तः, धन्याः भाग्यशालिनः तेषां अङ्गरजसा शरीरधूल्या, मलिनी भवन्ति धूसराः भवन्ति । स्वभावोक्तिरलङ्कारः ॥ १७ ॥

तापसी—[1]होदु ण मं अअं गणेदि । ( पार्श्वतोऽवलोक्य । ) को एत्थ इसिउमाराणं । ( राजानमवलोक्य । ) भद्दमुह एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गाहेण डिंभलीलाए वाही अमाणं वालमिअन्दअं ।

राजा—( उपगम्य । सस्मितम् । ) अयि भो महर्षिपुत्र,

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया ।
सत्वसंश्रयगुणोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः ॥१८॥

तापसी—[2]भद्दमुह ण खु अअं इसिकुमारओ ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवं तर्किणः। ( यथाभ्यर्थितमनुतिष्ठन् वालस्पर्शसुखमुपलभ्य आत्मगतम् । )

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं तस्य जनस्य कुर्याद्यस्यायमङ्गात् कृतिनः प्ररूढः ॥

तापसी—( उभौ निर्वर्ण्य । ) [3]अच्छरिअं अच्छरिअं ।

राजा—आर्ये, किमिव ।

---

१. भवतु न मां अयं गणयति । कोऽत्र ऋषिकुमाराणाम् । भद्रमुख, एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया वाध्यमानं वालमृगेन्द्रम् ।

२. भद्रमुख, न खल्वयं ऋषिकुमारकः ।

३. आश्चर्यमाश्चर्यम् ।

---

एवमिति ॥ एवं इत्थं, आश्रमस्य विरुद्धा विपरीता वृत्तिः यस्य तेन, त्वया, जन्मतः जन्म आरभ्य, सत्वानां अखिलप्राणिनां संश्रयः आश्रयणं स एव गुणः यस्य तादृशोऽपि, संयमः सम्यग्यमो अहिंसादिः । किमिति दूष्यते खिलीक्रियते कृष्णसर्पशिशुना कालभुजङ्गशिशुना, चन्दनः इव श्रीखण्डवृक्ष इवेत्युपमा ॥१८

अनेनेति ॥ कस्यापि अज्ञातकुलशीलस्य यस्य कस्यापि, कुलाङ्कुरेण वंशारम्भकेण, अनेन वालेन, स्पृष्टस्य, मम, गात्रेषु अवयवेषु, एवं इत्थं, सुखं सौख्यं, संजायते इति शेषः । कृतिनः भाग्यवतः, यस्य, अङ्गात्, अयं, प्ररूढः उत्पन्नः, तस्य, जनस्य कां निर्वृतिं कीदृशं सौख्यं, कुर्यात् उत्पादयेत् ॥ १९ ॥

तापसी—ईमस्स बालअस्स दे वि संवादिणी आकिदित्ति विह्मा-विदम्हि । अपरिइदस्सवि दे अप्पडिलोमोसंवुत्तोत्ति ।

राजा—(बालकमुपलालयन् ।) न चेन्मुनिकुमारोऽयं अथ कोऽस्य व्यपदेशः ।

तापसी—पुरुवंसो ।

राजा—(आत्मगतम् ।) कथमेकान्वयो मम । अतः खलु मदनु-कारिणमेनं अत्र भवती मन्यते । अस्त्येतत् पौरवाणां अन्त्यं कुल-व्रतम् ।

भवनेषु सुधा सितेषु पूर्वं क्षितिरक्षार्थमुशान्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥२०॥

(प्रकाशम् ।) न पुनरात्मगत्या मानुषाणां एष विषयः ।

तापसी—जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ।

---

१. अस्य बालस्य तेऽपि संवादिन्याकृतिरिति विस्मापितास्मि । अपरिचित-स्यापि ते अप्रतिलोमस्संवृत्तइति ।

२. पुरुवंशः ।

३. यथा भद्रमुखो भवति । अप्सरस्संबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

---

उभावित्यादि ॥ निर्वर्ण्य निध्याय, संवादिनी सदृशीत्यर्थः, विस्मापितास्मि आश्चर्यं प्रापितास्मि । अपरिचितस्य परिचयरहितस्यापि, अप्रतिलोमः अविरुद्धः, व्यपदेशः वंशः । एकः अभिन्नः अन्वयः वंशः यस्य सः । मां अनुकरोति आकृत्या अनुसरतीति मदनुकारी । तम् ॥

भवनेष्विति ॥ सुधया लेपनद्रव्येण, सितेषु धवलेषु, रसाधिकेषु इत्यपि क्वचित् पाठः । तदा अर्थस्तु रसाः शृङ्गारादयः तैः अधिकेषु रसाः अधिकाः येष्विति वा विग्रहः । भवनेषु हर्म्येषु, पूर्वं प्रथमं, ये, क्षितिरक्षार्थं भूसंरक्षणार्थं, निवासं, स्थितिं, उशन्ति वाञ्छन्ति । तेषां राज्ञां, पश्चात् चरमे वयसि, नियता नियमवती एका पतिव्रता येषु तानि, तादृशानि, तरुमूलानि वृक्षमूलानि, गृहीभवन्ति आवास प्रदेशाः भवन्ति । अभूततद्भावे च्विः ॥ २० ॥

**राजा**—(अपवार्य ।) हन्त द्वितीयमिदमाशा जननं । (प्रकाशम् ।) अथ सा तत्र भवती किमाख्यस्य राजर्षेः पत्नी ।

**तापसी**—को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तिदुं चिन्दिस्सदि ।

**राजा**—(स्वगतम् ।) इयं खलु कथा मामेव लक्ष्यीकरोति यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथवाऽनार्यः परदारव्यवहारः ।

(प्रविश्य मृण्मयूरहस्ता ।)

**तापसी**—सव्वदमण, सउन्दलावण्णं पेक्ख ।

**बालः**—(सदृष्टिक्षेपम् ।) कहिं वा मे अज्जू ।

**उभे**—णाम सारिस्सेण वंचिदो माउवच्चलो ।

**द्वितीया**—वच्छ, इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्खत्ति भणिदोसि ।

**राजा**—(आत्मगतम् ।) किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्र प्रस्तावो मे विषादाय कल्पते ।

---

१. कस्तस्य धर्मदारपरित्यागिनः नाम संकीर्तयितुं चिन्तयिष्यति ।

२. सर्वदमन, शकुन्तलावण्यं पश्य ।

३. कुत्र वा मे माता ।

४. नामसादृश्येन वञ्चितो मातृवत्सलः ।

५. वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

---

**न पुनरित्यादि** ॥ आत्मगत्या स्वभावगत्या, विषयः गोचरः भद्रमुखः भवानित्यर्थः, देवानां गुरोः पितुः मारीचस्येति यावत् । प्रसूता इमं पुत्रं व्यजायत । आशा जननं अभिलाषोत्पादनं । का आख्या यस्य सः किमाख्यः तस्य, धर्मदारपरित्यागिनः भार्यां त्यक्तवतः लक्ष्यीकरोति विषयीकरोति । नामतः पृच्छामि मातुः नामधेयं पृच्छामीत्यर्थः । अनार्यः असाधुः, परदारव्यवहारः अन्यकलत्रविषयको विचारः शकुन्तस्य पक्षिणः मयूरस्येति यावत्, लावण्यं सौन्दर्यम् । वञ्चितः विप्रलब्धः । मृगतृष्णिका मरीचिका सेव, प्रस्तावः प्रसङ्गः, विषादाय दुःखाय, कल्पते

बालः—अज्जुए, रोअदि मे एसो भद्दमोरओ। (इति क्रीडनकमादत्ते।)

प्रथमा—(विलोक्य। सहर्षम्।) अम्हहे रक्खाकरण्डअं से मणिबन्धे ण दीसइ।

राजा—अलमलमावेगेन। नन्विदमस्य सिंहशावविमर्दात् परिभ्रष्टम्। (इत्यादातुं इच्छति।)

उभे—मा क्खु एदं अवलम्बिअ। कहं गहीदं णेण। (इति विस्मयादुरो निहितहस्ते परस्परमवलोकयतः।)

राजा—किमर्थं प्रतिषिद्धास्स्मः।

प्रथमा—सुणादु महाराओ। एसा अवराजिदा णाम ओसही इमस्स जादकम्मसमए भअवदा मारीएण दिण्णा। एदं किळ मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हदि।

राजा—अथ गृह्णाति।

प्रथमा—तदो तं सप्पो भविअ दंसइ।

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया।

---

१ मातः रोचते मे एषः भद्रमयूरः।

२. अहो रक्षाकरण्डकं अस्य मणिबन्धे न दृश्यते।

३. मा खलु इदमवलम्ब्य। कथं गृहीतमनेन।

४. शृणोतु महाराजः। एषाऽपराजिता नामौषधिः अस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वा परो भूमिपतितां न गृह्णाति।

५. ततः तं सर्पो भूत्वा दशति।

---

समर्थो भवेद्वेति वितर्कः "क्लृपि संपद्यमाने च" इत्यनेन चतुर्थी। भद्रमयूरः मनोज्ञः बर्हिणः, सोद्वेगं सव्यथं, रक्षाकरण्डकं रक्षावीटिका, मणिबन्धे प्रकोष्ठे, सिंहशावः केसरिकिशोरकः तस्य उपमर्दात् पीडनसम्मर्दात्, परिभ्रष्टं अधःपतितम्। मा अवलम्ब्य अवलम्बनं न कर्तव्यं इत्यर्थः। प्रतिषिद्धाः निवारिताः॥

उभे—[1]अणेअसो ।

राजा—(सहर्षं । आत्मगतम् ।) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि ।

(इति बालं परिष्वजते ।)

द्वितीया—[2]सुव्वते एहि । इमं वुत्तन्दं णिअमव्वावुडाए सउन्दलाए णिवेदेह्म ।

(इति निष्क्रान्ते ।)

बालः—[3]मुंच मं जाव अज्जूए सआसं गमिस्सम् ।

राजा—पुत्रक, मया सहैव मातरं अभिनन्दिष्यसि ।

बालः—[4]मम क्खु तादो दुस्सन्दो ण तुमं ।

राजा—(सस्मितम् ।) एष विवाद एव प्रत्याययति ।

(ततः प्रविशत्येकवेणीधरा शकुन्तला ।)

शकुन्तला—[5]विआरकाले वि पकिदित्थं सव्वदमणस्स आसहिं सुणिअ ण मे आसा आसी अत्तणो भाअहेएसु । अहवा जह साणुमदीए आचक्खिदं तह संभावी अदि एदम् ।

राजा—(शकुन्तलां विलोक्य ।) अये सेयमत्रभवती शकुन्तला । येषा ।

---

१. अनेकशः ।

२. सुव्रते एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

३. मुञ्च मां यावदम्बायास्सकाशं गमिष्यामि ।

४. मम खलु तातो दुष्यन्तः न त्वम् ।

५. विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आशा आसीदात्मनो भागधेयेषु । अथवा यथा सानुमत्या आख्यातं तथा संभाव्यत एतत् ।

---

श्रृणोत्वित्यादि ॥ विक्रिया अन्यथाभावः अनेकशः बहुशः, परिष्वजते आलिङ्गति । नियमे व्रतानुष्ठाने व्यापृतायै व्यासक्तायै निवेदयावः कथयावः । प्रत्याययति प्रत्ययवन्तं करोतीत्यर्थः । प्रकृतिस्थां अविकृताम् ॥

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥२१॥

शकुन्तला—(पश्चात्तापविवर्णं राजानं दृष्ट्वा ।) [1]ण खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।

बालः—(मातरमुपेत्य ।) [2]अज्जुए, एसो को वि पुरिसो मं पुत्तत्ति आलिङ्गदि ।

राजा—प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तं अनुकूलपरिणामं संवृत्तं। यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

शकुन्तला—(आत्मगतम् ।) [3]हिअअ, अस्सस अस्सस । परिच्चत्तमच्चरेण अणिअंपिदम्हि देव्वेण । अज्जउत्तो खु एसो ।

---

१. न खल्वार्यपुत्र इव । ततः क एषः इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ।

२. अम्ब, एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ।

३. हृदय, आश्वसिहि आश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः ।

---

परिधूसरे रजोध्वस्ते, वसने उत्तरीयान्तरीये, वसाना बिभ्राणा, नियमेन व्रतोपवासादिना क्षाममुखी ताम्यद्वदना धृता प्रवासचिह्नत्वेन परिगृहीता एकवेणी एकीकृता जटा यया सा तादृशी, शुद्धशीला निर्मलचारित्रा, एषा, अतिनिष्करुणस्य अतिनिष्ठुरस्य, मम मत्संबन्धिनं, दीर्घं बहुकालीनं, विरहव्रतं नियोगोचितकुलपालिकानियमं बिभर्ति वहति । स्वभावोक्तिः । वसन्तमालिकावृत्तम् ॥ २९ ॥

पश्चात्तापेत्यादि ॥ पश्चात्तापेन अनुशयदुःखेन विवर्णं नष्टशोभं, आर्यपुत्रः भर्ता, इव शब्दः वाक्यालंकारे । कृतं विरचितं रक्षामङ्गलं बालरक्षायोग्यमङ्गल्यमूलिकाबन्धनं यस्मै तं । संसर्गे सम्मर्दन संबन्धेन वा, दूषयति खिलीकरोति अनुकूलः शोभनः परिपाकः यस्य तत् तादृशं । प्रत्यभिज्ञातं सोऽयं इत्याकारकप्रत्यभिज्ञाविषयीकृतं । पश्यामि मन्ये इत्यर्थः । अनुकम्पितास्मि दयाविषयीकृतास्मि ।

राजा—प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २२ ॥

शकुन्तला—[1]जेदु जेदु अज्जउत्तो ।
(इत्यर्धोक्ते बाष्पकण्ठी विरमति ।)

राजा—सुन्दरि,

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

बालः—[2]अज्जुए को एसो ।

शकुन्तला—[3]वच्छ दे भाअहे आइं पुच्छेहि ।

राजा—(शकुन्तलायाः पादयोः प्रणिपत्य ।)

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसस्सम्मोहो मे तदा बलवानभूत् ।

---

१. जयतु जयतु आर्यपुत्रः ।
२. मातः क एषः ।
३. वत्स, ते भागधेयानि पृच्छ ।

---

स्मृतीति ॥ हे सुमुखि, स्मृत्या स्मरणेन भिन्नः निरस्तः मोहः अज्ञानं तमो राहुरिव यस्य तस्य, मे मम, प्रमुखे पुरस्तादेशे, दिष्ट्या भाग्यातिशयेन, स्थितासि स्थितिं प्राप्तासि उपरागस्य ग्रहस्य अन्तं अवसाने, रोहिणी तन्नाम्नी तारका, शशिनः चन्द्रस्य, योगं संबन्धं, समुपगता प्राप्ता, भवति । दृष्टान्तालङ्कारः ॥ २२ ॥

बाष्पेणेति ॥ जयशब्दे, बाष्पेण अश्रुप्रारम्भेण, प्रतिषिद्धेऽपि स्तम्भितेऽपि, मया (कर्त्रा) जितं । भावे क्तः । यत् यस्मात् कारणात, संस्कारेण रक्तिमातिशयाधायकरञ्जनद्रव्यानुलेपनेन, पाटलौ न भवतइति असंस्कारपाटलौ, तादृशौ ओष्ठपटौ अधरोष्ठपुटौ यस्मिन् तत् तादृशं, मुखं वदनं, दृष्टं मया अवलोकितं । काव्यलिङ्गं अलङ्कारः ॥ २३ ॥

सुतन्विति ॥ हे सुतनु शोभनाङ्गि, ते तव, हृदयात् मानसात्, प्रत्यादेशेन मत्कृतेन तिरस्कारेण जातं व्यलीकं अप्रियं, अपैतु दूरतो यातु । तदा तस्मिन्

प्रबलतमसामेवं प्रायाश्शुभेषु प्रवृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहि शङ्कया ॥ २४ ॥

शकुन्तला—[1]उट्ठेदु अज्जउत्तो । णूणं मे सुअरिदप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामाहिमुहं आसी । जेण साणुक्कोसोऽवि अज्जउत्तो मइ विरसो संवुत्तो ।

(राजा उत्तिष्ठति ।)

शकुन्तला—[2]अह कहं अज्जउत्तेण सुमरिदो दुःखभाई अअं जणो।

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो
बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य बाष्पं
प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

(इति यथोक्तमनुतिष्ठति ।)

---

१. उत्तिष्ठतु आर्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीत् । येन सानुक्रोशोऽप्यार्यपुत्रः मयि विरसः संवृत्तः ।

२. अथ कथं आर्यपुत्रेण स्मृतो दुःखभागी अयं जनः ।

---

समये, मे मम, मनसः हृदयस्य, किमपि अनिर्वचनीयप्रकारः, बलवान् दृढतरः, सम्मोहः अज्ञानं, अभूत् । प्रबलतमसां अतिदृढतरमोहवतां प्राणिनां शुभेषु सद्विषयेष्वपि, एवंप्रायाः एवंरूपाः, प्रवृत्तयः, भवन्ति । तत्र दृष्टान्तमाह । स्रजमित्यादिना अन्धः, शिरसि मस्तके, क्षिप्तां निवेशितां स्रजमपि मालामपि, अहि शङ्कया सर्पभ्रान्त्या, धुनोति दूरतः अपसारयति ॥ २४ ॥

**मोहादिति** ॥ हे सुतनु शोभनाङ्गि, पूर्वं पुरा, मोहात् अज्ञानात्, अधरं, परिबाधमानः औष्ण्येन समन्तात् सन्तापयन्, यः ते बाष्पबिन्दुः शोकाश्रुकणः, मया, उपेक्षितः उपेक्षाविषयीकृतः, आ ईषत् कुटिलेषु वक्रेषु पक्ष्मसु नेत्रलोमसु विलग्नं विषक्तं, तं, बाष्पं अश्रुजलं, अद्य इदानीं, तावत् साकल्येन, प्रमृज्य संशोध्य, विगतानुशयः विनष्टपश्चात्तापः, भवेयं स्याम् ॥ २५ ॥

**इति यथोक्तं इत्यादि** ॥ उक्तंअनतिक्रम्य यथोक्त वचनानुसारेणेत्यर्थः।

शकुन्तला—(नाममुद्रां दृष्ट्वा ।) [1]अज्जउत्त एदं ते अङ्गुलीअअम् ।

राजा—अस्मदङ्गुलीयोपलम्भात् खलु स्मृतिरुपलब्धा ।

शकुन्तला—[2]विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकाले दुल्लहं आसी ।

राजा—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ॥

शकुन्तला—[3]णं से विस्ससामि । अज्जउत्तो एव्व णं धारेदु ।

(ततः प्रविशति मातलिः ।)

मातलिः—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते ।

राजा—सुहृत् संपादितः स्वादुफलो मे मनोरथः । मातले, न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ।

मातलिः—(सस्मितम् ।) किमीश्वराणां परोक्षम् । एत्वायुष्मान् । भगवान् मारीचस्ते दर्शनं वितरति ।

राजा—शकुन्तले, अवलंब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुं इच्छामि ।

शकुन्तला—[4]हिरियामि अज्जउत्तेण सह गुरुसमीवं गन्तुम् ।

राजा—अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

(सर्वे परिक्रामन्ति ।)

---

१. आर्यपुत्र, इदं ते अङ्गुलीयकम् ।

२. विषमं कृतं अनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभं आसीत् ।

३. नास्य विश्वसिमि । आर्यपुत्र एवैतद्धारयतु ।

४. जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

---

अनुतिष्ठति करोति । नाममुद्रां नामाक्षराङ्कितं अङ्गुलीयकं, उपलम्भात् प्राप्तेः उपलब्धा अधिगता । विषमं विरुद्धं । प्रत्ययकाले विस्रंभोत्पादनसमये, ऋतोः ऋतुकालस्य समवायः सङ्गतिः, तस्य चिह्नं लक्षणं, प्रतिपद्यतां प्राप्नोतु । सुहृदा मित्रेण, संपादितः साधितः, अतएव मे मनोरथः स्वादुफलः मनोज्ञफलः आखण्डलेन इन्द्रेण, अवलंब्यतां गृह्यताम् । जिह्रेमि लज्जे । अभ्युदयकालेषु श्रेयस्साधनसमयेषु ॥

(ततः प्रविशत्यदित्या सार्धं आसनस्थो मारीचः ।)

**मारीचः**—(राजानमवलोक्य ।) दाक्षायणि,

पुत्रस्य ते रणशिरस्य यमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य गोप्ता ।
चापेन यस्य विनिवर्तितकर्मजातं
तत् कोटिमत् कुलिशमाभरणं मघोनः ॥ २६ ॥

**अदितिः**—[1]संभावणी आणुभावा से आकिदी ।

**मातलिः**—आयुष्मन्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तं अवलोकयतः । तावुपसर्प ।

**राजा**—मातले, एतौ ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत् तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत् स्रष्टुरेकान्तरम् ॥ २७ ॥

---

1. संभावनीयानुभावास्याकृतिः ।

---

**पुत्रस्येति** ॥ हे दाक्षायणि, अयं रणशिरसि युद्धारम्भे, ते तव, पुत्रस्य, अग्रयायी अग्रेसरः, दुष्यन्त इति अभिहितः ख्यातः, भुवनस्य लोकस्य, गोप्ता रक्षकश्च । यस्य, चापेन धनुषा, विनिवर्तितं निर्वर्तितकर्मयुद्धव्यापारः यस्य तत्, तादृशं, तत् प्रसिद्धं, कोटिमत् निशितधारं, कुलिशं वज्रायुधं, मघोनः इन्द्रस्य आभरणं भूषणं, जातं अभूत् ॥ २६ ॥

**प्राहुरिति** ॥ मुनयः ऋषयः, यत् द्वन्द्वं, द्वादशधा स्थितस्य तेजसः द्वादशाकारभाजां आदित्यानामित्यर्थः । कारणं निमित्तं प्राहुः ब्रुवन्ति । ब्रूतेर्लटि प्रथमपुरुषबहुवचने रूपं किंच, यत् (कर्तृ) भुवनत्रयस्य भूर्भुवस्स्वर्लक्षणस्य, भर्तारं पोषकत्वेन धरणसमर्थं, यज्ञे भागः हविरंशः येषां इति यज्ञभागाः देवाः तेषां ईश्वरं नाथं महेन्द्रमित्यर्थः । सुषुवे जनयामास । यस्मिन् द्वन्द्वे, आत्मभुवः चतुर्मुखस्य ब्रह्मणोऽपि, परः उत्कृष्टः पुरुषः विष्णुः, भवाय जन्मने, आस्पदं स्थानं, चक्रे ।

पातलिः—अथ किं ।

राजा—(उपगम्य ।) उभाभ्यामपि वासवानुयोज्यो दुष्यन्तः प्रणमति ।

मारीचः—वत्स, चिरं जीव । पृथिवीं पालय ।

अदिति—वच्छ अप्पडिरहो होहि ।[1]

शकुन्तला—दारअसहिदा वोपादवन्दणं करेमि ।[2]

मारीचः—वत्से,

आखण्डलसमो भर्ता जयन्तप्रतिमस्सुतः ।
आशीरन्या न ते योग्या पौलोमी सदृशी भव ॥ २८ ॥

अदितिः—जादे भत्तुणो अभिमदा होहि । अवस्सं दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उवविसह ।[3] (सर्वे प्रजापतिमभितः उपविशन्ति ।)

मारीचः—एकैकं निर्दिशन् ।

---

१. वत्स अप्रतिरथो भव ।

२. दारकसहिता वां पादवन्दनं करोमि ।

३. जाते भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्सः उभयकुलनन्दनो भवतु उपविशत ।

---

तत् तादृशं, दक्षमरीचिसंभवं दक्षात् मरीचेश्च संभवः उत्पत्तिः यस्य तत् तथोक्तं, (दक्षात् संभूता दाक्षायणी मरीचेस्संभूतः मारीचः ताभ्यां घटितत्वादेवमुक्तं) अतएव, स्रष्टुः ब्रह्मणः एकः मरीच्यादिः अन्तरं यस्य तत् (ब्रह्मणो मानसपुत्र दक्षमरीची तदपत्याभ्यामस्य संभूतत्वादेवमुक्तं) द्वन्द्व मिथुनं वा इदं । अत्र इद शब्दः पुरोवर्तिवस्तुनिर्देशपरः । शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

आखण्डलेति ॥ ते तव, भर्ता नाथः, आखण्डलेन इन्द्रेण, समः सदृशः, सुतः पुत्रः जयन्तेन प्रतिमः समः । अतः सर्वोत्तमभर्तृगामित्वं असदृशपुत्रभाक्त्वं वा नाशास्यं । तस्य स्वतस्सिद्धत्वात् । ते सर्वोत्तमपदे विराजमानायाः तव, अन्या इतरा आशीः गृहधनधान्यादि विषयिणी, न योग्या नानुरूपा तेषां कैमुत्य न्यायतः सिद्धत्वात् । अतः इममेवा शासनीयमित्याह पौलोम्येति । त्वं च पौलोम्या इन्द्राण्या, सदृशी तुल्या, भव भूयाः इत्याशीः ॥ २८ ॥

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं वस्समागतम् ॥ २९ ॥

राजा—भगवन्, प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमः तव प्रसादस्य पुरस्तु सम्पदः ॥

मातलिः—एवं विधातारः प्रसीदन्ति ।

राजा—भगवन्निमां आज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन् अपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शनात् ऊढपूर्वां तद्दुहितरं अवगतोऽहं । तत् चित्रमिव मे प्रतिभाति ।

यथा गजे नेति समक्षरूपे तस्मिन्नतिक्रामति संशयस्स्यात् ।
पदानि दृष्ट्वा तु भवेत् प्रतीतिस्तथा विधो मे मनसो विकारः ॥

---

दिष्ट्येति । साध्वी पतिव्रता, शकुन्तला, इदं सत् श्लाघ्यं अपत्यं, भवान् एवं विद्यमानानां वः युष्माकं, समागतं समागमः, श्रद्धा, वित्तं विधिश्चेति, त्रितय इति निदर्शना ॥ २९ ॥

उदेतीति ॥ पूर्वं प्रथमतः, कुसुमं पुष्पं, उदेति उत्पद्यते, ततः पश्चात्, फलं, उदेतीत्यनुषङ्गः । प्राक् अग्रे घनोदयः मेघोदयः तदनन्तरं ततः परम्, पयः जलं । निमित्तं कारणं नैमित्तिकं कार्यं तयोः अयं क्रमः प्राक्कारणं पश्चात् कार्यमिति इत्थं लौकिकी परिपाटी । तव भवतः, प्रसादस्य अनुग्रहरूपस्य कारणस्य, संपदः कार्यभूतास्समृद्धयस्तु, पुरः कारणभूतप्रसादात् प्रागेव निष्पद्यन्ते इति अहो जगद्विलक्षणं भावत्कं चरित्रमिति भावः ॥ ३० ॥

यथेति ॥ गजे द्विरदपतौ, समक्षरूपे प्रत्यक्षस्वरूपे तिष्ठत्यपि, न अयं गजो नेति प्रतीतिः यथास्यात । तस्मिन्नेव गजे, अतिक्रामति चक्षुः पथमतीते सति संशयः गजो वानवेति सन्देहः यथा स्यात् । ततः सन्देहनिर्णयाय पदानि गजचरणविन्यासचिह्नानि, दृष्ट्वा विलोक्य, प्रतीतिः गजइति निश्चयात्मिका बुद्धिः यथा भवेत्

मारीचः—वत्स, अलमात्मापराधशङ्कया। सम्मोहोऽपि त्वय्युपपन्नः। श्रूयताम्।

राजा—अवहितोऽस्मि।

मारीचः—यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससश्शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति। स चायमङ्गुलीयकदर्शनावसानः।

राजा—(सोच्छ्वासम्।) एषः वचनीयान्मुक्तोऽस्मि।

शकुन्तला—(स्वगतम्।)[1]दिट्ठिआ अआरणपच्चादेसी ण अज्जउत्तो। ण हु सत्तं अत्ताणं समुरेमि। अहवा पत्तो मए सहि सावो विरहसुण्णहिअआए ण विदिदो। अदो सहीहिं सन्दिट्ठम्हि। भत्तुणो अङ्गुलीअअं दंसइदव्वंत्ति॥

मारीचः—वत्से, चरितार्थाऽसि। सह धर्मचारिणं प्रति न त्वया मन्युः कार्यः। पश्य।

---

१. दिष्ट्या अकारणप्रत्यादेशी नार्यपुत्रः। न खलु शप्तमात्मानं स्मरामि। अथ वा प्राप्तो मया सहि शापो विरहशून्यहृदयया न विदितः। अतः सखीभ्यां सन्दिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति।

---

उत्पद्येत। तथाविधः तादृशविकारसदृशः मे मम मनसाः चित्तस्य, विकारः अन्यथाभावः, अभवदिति शेषः॥ ३१॥

वत्सेत्यादि॥ उपपन्नः युक्तः अवहितः अवधानयुक्तः। प्रत्यक्षं चक्षुर्गोचरीकृतं वैक्लव्यं मनोव्यथा यस्याः तां। दाक्षायणीं दक्षपुत्रीं अदितिमित्यर्थः। अवगतोऽस्मि ज्ञातवानभवम्। तपस्विनी शोच्या। प्रत्यादिष्टा निराकृता। सः शापः। अङ्गुलीयकस्य नाममुद्रायाः दर्शनं विलोकनं अवसानं पर्यन्तसमयः यस्य सः तादृशः। वचनीयात् लोकापवादात्। अकारणपरित्यागी निष्कारणतिरस्कारदोषभाक्॥

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

राजा—यथाह भगवन् ।

मारीचः—वत्स, कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्रएष शाकुन्तलेयः ।

राजा—भगवन्, अत्र खलु मे वंशप्रतिष्ठा ।

मारीचः—तथा भाविनं एनं चक्रवर्तिनं अवगच्छतु भवान् । पश्य ।

रथेनानुत्खातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रति रथः ।
इहायं सत्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरतइति लोकस्य भरणात् ॥ ३३ ॥

---

**शापादिति** ॥ भर्तरि प्रणयिनि शापात् स्मृतिरोधेन विस्मरणेन रूक्षे कठिनचित्ते सति, त्वं, प्रतिहतासि तिरस्कृतासि । संप्रति तु, अपेततमसि नष्टविस्मरदोषे, तस्मिन् भर्तरि, (विषये) प्रभुता प्रभुत्वं, तवैव नान्यस्याः सपत्न्या इत्यर्थः दृष्टान्तमाह । छाया प्रतिबिम्बं, (कर्तृ) मलेन धूल्यादिना उपहतः नाशितः प्रसादः नैर्मल्य यस्य तस्मिन्, दर्पणे मुकुरे, न मूर्च्छति न प्रसरति । शुद्धे निर्मले, तस्मिंस्तु, सुलभावकाशा सुखेन प्रसरणशालिनी, भवतीति पदमध्याहार्यं दृष्टान्तालङ्कारः ॥ ३२ ॥

**रथेनेति** ॥ न विद्यते प्रतिरथः यस्य सः अप्रतिरथः असदृशवीरः इत्यर्थः अयं अनुत्खाता अस्खलिता अतएव स्तिमिता निश्चला गतिः गमनं यस्य सः तेन, रथेन स्यन्दनेन, (करणेन) तीर्णाः जलधयः येन तादृशस्सन्, सप्तद्वीपां सप्तद्वीपवतीं, वसुधां भूमिं, पुराजयति जेष्यति । "यावत् पुरा निपातयोर्लट्" इत्यनेन पुराशब्दयोगे भविष्यति लट् । इह अस्मिन्नाश्रमे, सत्वानां प्राणिनां, प्रसभदमनात्

राजा—भगवता कृतसंस्कारे सर्वमस्मिन् वयं आशास्महे ।

अदितिः—[1]भअवं, इमाए दुहिदुमणोरहसंपत्तीए कण्णोवि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व उव अरन्दी चिट्ठइ ।

शकुन्तला—(आत्मगतम् ।) [2]मणोरहो खु मे भणिदो भअवदीए ।

मारीचः—तपः प्रभावात् प्रत्यक्षं सर्वमेव तत्र भवतः ।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः ।

मारीचः—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

(प्रविश्य ।)

शिष्यः—भगवन्, अवहितोऽस्मि ।

मारीचः—गालव, इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः—यदाज्ञापयति भगवान् । (इति निष्क्रान्तः ।)

मारीचः—वत्स, त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा—यदाज्ञापयति भगवान् ।

---

१. भगवन्, अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावत् श्रुतविस्तारः क्रियतां । दुहितृवत्सला मेनका इहैवोपचरन्ती तिष्ठति ।

२. मनोरथः खलु मे भणितः भगवत्या ।

---

हठोपमर्दनाद्धेतोः, सर्वदमनः सर्वदमननामभागासीत् । पुनः भूयोऽपि लोकस्य जगतः, भरणात् (कर्मणि षष्ठी) भरतः इति, आख्यां नामतः प्रसिद्धिं, यास्यति प्राप्स्यति । भाविकालङ्कारः । "भाविकं भूतभाव्यार्थसाक्षात्कारस्य वर्णनम्" इति लक्षणात् ॥

**मारीचः**—वत्स, किं ते भूयः प्रियं उपकरोमि ।

**राजा**—अतः परमपि प्रियमस्ति । यदिह भगवान् प्रियं कर्तुं इच्छति । तर्हीदमस्तु भरतवाक्यम् ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतमहतां महीयतां ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३४ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ॥

समाप्तमिदं अभिज्ञानशाकुन्तलं नाम नाटकम् ॥

---

प्रवर्ततां इति ॥ पार्थिवः राजा, प्रकृतीनां प्रजानां, हिताय क्षेमाय, प्रवर्ततां प्रयततां । श्रुतेन शास्त्रश्रवणेन, महतां गरिष्ठानां, सरस्वती भारती, महीयतां पूज्यताम् । परितः समन्तात् गता व्याप्ता शक्तिः यस्य सः तादृशः, आत्मभूः स्वयंभूः, नीललोहितः शङ्करः, ममापि, पुनर्भवं पुनर्जन्मसंबन्धं, क्षपयतु विरतं करोतु ॥ ३४ ॥

इति अभिज्ञानशाकुन्तलव्याख्यायां सप्तमोऽङ्कः समाप्तः ।

चेन्नपुर्यां "ओरियण्ठल्" मुद्राक्षरशालायां मुद्रितम् ।

# THE TRANSLATION

OF

# ABHIJNANA SAKUNTALA.

## Act I.

### Benediction.

MAY Isa preserve you! He who is endowed with these eight visible forms, (*viz.*) that which is the first creation of the creator (*i. e.*, water), that which bears the oblation offered according to the sacrificial rites, (*i. e.*, fire), that which is the offerer of the oblations, (*i. e.*, the sacrificer), those two (the Sun and the Moon) which regulate time, that which, having the quality (sound) perceptible by the ear, remains pervading the universe, (*i. e.*, ether), that which they call the originator of all material things, (*i. e.* the earth), and that by which living beings do breathe (*i. e.*, the air.)

(*At the end of the benediction, enter the manager*)

*Manager.*—(*Looking towards the tiring-room,*) Lady! please come here if the arrangement of the tiring-room are over.

*Enter* Actress.

*Actress.*—Here I am my lord.

*Manager.*—Lady! this audience is or the most part composed of enlightened men; and we have now to enact the drama entitled "Abhijnana Sakuntala," composed by Kalidasa, which has not been hitherto represented on the stage. Let therefore care be taken by each actor (with respect to his own part).

*Actress.*—Nothing will be defective in the acting as you have well arranged the representation.

*Manager.*—Lady, I shall relate to you the real truth. I would regard no skill in representation as perfect unless the learned are satisfied with it; the mind cf even those who are highly instructed is diffident of itself.

*Actress.*—So indeed it is, my lord. Let your honour now command what is next to be done.

*Manager.*—What else than music, which would be charming to the ears of this assembly? Sing then about the summer season, which is fit for enjoyment, and which has just set in. For these are the days in which it is pleasant to bathe in cold waters, in which the sylvan gales are fragrant from contact with the Patala flowers, in which sleep is easily got in shadowy places, and which are pleasant at the close.

*Actress.*—I shall do so (*sings*). Loving maidens make earrings of Sirisha flowers, which are very gently kissed by the bees and the ends of whose filaments are very tender.

*Manager.*—Well sung, my dear; and now on every side the audience rivetting their minds on the song is (motionless) as if painted in a picture. By resorting to what subject of representation shall we please them?

*Actress.*—I have been indeed already commanded by your reverence to make the subject of exhibition the new drama entitled "Abhijnana Sakuntala.

*Manager.*—Lady, I am well reminded. I have indeed forgotten it this moment. For I was forcibly carried away by the ravishing melody of thy song like king Dushyanta here by the antelope of immense speed.

(*Exeunt*)

HERE ENDS THE PROLOGUE.

---

*Then enter in a chariot the king attended by his charioteer and chasing an antelope, he being armed with a bow having an arrow fixed to it*

*Charioteer.*—(*Looking at the King and the antelope.*)

O long-lived one! When I cast a glance on the spotted antelope and on thee with thy bow strung, I see, as it were before my very eyes, Siva chasing the deer.

*King.*—Charioteer! We have been drawn to a distance by the antelope here. There he now, gracefully on account of the bending of his neck, casts his eyes constantly on the chariot pursuing him, repeatedly enters into the forepart of his body by (contracting) the hinder-half through dread of the descent of an arrow, and strews the road with the half-chewed Darbha grass slipping from his mouth open through fatigue. Behold! on account of his lofty leaps, he flies a great distance (in the sky) and travels a little on the earth. (*With surprise.*) How is it that he is hardly visible to me while I am yet chasing him?

*Charioteer.*—Long-lived one! I have slackened the speed of the chariot by drawing in the reins, the ground being uneven. Hence the antelope is separated (from us) by a longer distance. Now that you are on an even ground, there will be no difficulty in overtaking him.

*King.*—Let loose the reins then.

*Charioteer.*—As the long-lived one (king) commands: (*Exhibiting by gesticulation the speed of the chariot*). See, see, long-lived one! The reins being loosened, these chariot-horses run as if jealous of the speed of the deer, with the forepart of their bodies well stretched out, with the crests of the *chámárás* motionless, with their ears which were formerly erect, now bent backwards and not allowing themselves to be overtaken even by the dust raised by themselves.

*King.*—Verily, the horses outstrip those of Surya and Indra; for by reason of the velocity of the chariot, that which appeared minute to my view suddenly attains magnitude; that which was divided in half becomes as if united; that also which is naturally crooked appears straight to the eyes; nothing is at a distance from me, nor at my side even for a moment. Charioteer! See him being killed.

(*Gesticulates taking aim with an arrow.*)

*(Behind the scene.)*

O king! This deer belongs to the hermitage; it is not fit to be killed, it is not fit to be killed.

*Charioteer.*—*(Listening and looking)* O king! Some hermits have placed themselves between us and the spotted deer lying in the descent of the arrow.

*King.*—*(In haste).* Then let the horses be restrained.

*Charioteer.*—I shall do so. *(Stops the chariot.)*

*(Then enter a hermit with two others.)*

*Hermit.*—*(Raising his hand).* O king! This is a deer belonging to the hermitage. Let it not be slain, let it not be slain. Not indeed, not indeed should this arrow fall upon the delicate body of the deer, like fire upon a heap of flowers. Where alas! is the frail existence of the fawns, and where thy arrows whose descent is sharp and which are strong as the thunderbolt? Withdraw therefore your well-aimed arrow. Your weapon is for the protection of the afflicted and not for injuring the guiltless.

*King.*—Here it is withdrawn. *(Does accordingly).*

*Hermit.*—This is worthy of your honour, the light of the race of Puru. This well becomes you whose birth has taken place in the family of Puru. May you have a son endowed with such virtues, who shall become a lord paramount!

*The other Hermits.*—*(Raising their hands)* You will surely have a son who shall become a universal monarch.

*King.*—*(Bowing)* I accept the blessings of the hermits.

*Hermit.*—O King! We set out for the purpose of collecting sacrificial sticks; yonder, on the banks of the Malini is seen the hermitage of the great sage Kanva. If it does not interfere with the discharge of any other duty, please go to the hermitage and accept the hospitable reception due to a guest. Moreover, beholding the delightful rites of the hermits, all the hindrances to which are warded off by you you will come to know how much your arm, marked with the scar of the bowstring, protects them.

*King.*—Is the head of your family present there?

*Hermit.*—Having just directed his daughter Sakuntala to receive all guests hospitably, he is gone to Somathirtha to propitiate the unfavourable destiny of hers.

*King.*—(*To himself*) Well, I shall see her. (*Aloud*). She will communicate to the sage, my respect for him.

*Hermit.*—Then let us go.

(*Exit with his pupils.*)

*King.*—Charioteer, urge on the steeds. We shall purify ourselves by the sight of the holy hermitage.

*Charioteer.*—As the king commands. (*Again exhibits the velocity of the chariot.*)

*King.*—(*Looking about*) charioteer, even though not told it is (clearly) understood that this is an expanse of the penance-grove.

*Charioteer.*—How?

*King.*—What, don't you see it? Here there are wild grains beneath the trees fallen from the openings of the hollow trunks (of trees) with parrots in the interior; in other places are observed the oily polished stones that serve to bruise the fruits of Ingudi; the deer, having acquired confidence, hear the sound without being disturbed in their movements; and the paths leading to the reservoirs are marked with lines by the drippings from the ends of the bark garments.

*Charioteer.*—All that is quite true.

*King.*—(*Advancing a little further.*) There must not be any disturbance to the inhabitants of the penance-grove. Stop the chariot here that I may get down.

*Charioteer.*—I, have drawn the reins; let the long-lived one descend.

*King.*—(*Getting down*). We must enter the penance-groves in humble attire. Take charge 'of this, therefore. (*Thus takes the ornaments and the bow and hands them over to the charioteer*). Charioteer, by the time I return from visiting

the inmates of the hermitage, let the horses be watered and refreshed.

*Charioteer.*—Yes. (*Exit.*)

*King.*—(*Walking about and looking*). Here is the entrance to the hermitage. I will enter. (*Entering and acting as if he observed an omen.*) This hermitage is peaceful; yet my arm throbs; where can there be its result in this place? Or why, the gates of destiny are everywhere.

(*Behind the scene.*)

This way. my beloved companions, this way.

*King.*—(*Listening*) Ah! I hear something like a conversation to the right of the grove of trees. I shall go there. (*Walking round and looking about*) Ah! there are maidens of the hermitage coming up just hither to water the young trees with watering pots suited to their size. (*Gazing at them.*) Oh! How pleasant is their sight! This excellent form of one living in the hermitage, is rarely met with in the harem; indeed the garden plants are certainly surpassed by wild plants by the force of their excellences. I shall meanwhile remain under this shade and watch. (*Stands looking*).

(*Then enter Sakuntala with two companions engaged in the manner described.*)

*Sakuntala.*—This way, my companions, this way.

*Anasuya.*—Friend Sakuntala, I think that the young trees of the hermitage are dearer to your father Kanva even than yourself, since even you, who are as tender as the Navamalika flower, are ordered to water these trenches round the roots of the trees.

*Sakuntala.*—It is not merely my father's order. I have a sisterly affection for them.

(*Waters them.*)

*King.*—What? Is this the daughter of Kanva? Truly his reverence Kasyapa is one of little discrimination, inasmuch as he appoints her to the duties of a hermitage. The sage, who desires to make this naturally lovely form, capable

of enduring austerities, surely endeavours to cut the Sam plant with the edge of the leaf of a blue-lotus. Well, concealing myself behind this tree, I will observe her without raising her suspicions. (*Does accordingly*)

*Sakuntala.*—Dear Anasuya, I am tied up by Priyamvada by this very tightly fastened bark-garment. Please loosen it.

*Anasuya.*—Yes. (*Loosens* it.)

*Priyamvada.*—(*Smiling*). Blame your blooming youthfulness which has caused your bosom to expand. Why do you blame me?

*King.*—Though, to her age a bark garment is unsuitable still, it does possess the charm of an embellishment; for, lotus is charming though overspread with moss; the spot of the Moon, though dark. heightens her beauty; this graceful maiden, though in her bark-garment, looks all the more lovely; for what does not serve as an ornament to charming forms?

*Sakuntala.*—(*Looking forward*). The Kosara tree bids me as it were hasten (towards it) with the fingers of young leaves set in motion by the breeze. I shall honour it (*goes towards it.*)

*Priyamvada.*—Dear Sakuntala, stay there for a while; for, the Kesara tree, with thee by its side, will appear as if wedded to a creeper.

*Sakuntala.*—That is why you are truly called Priyamvada (the speaker of agreeable things).

*King.*—Though agreeable, still it is the truth that Priyamvada speaks; for, her lower lip has the colour of a young sprout; her arms resemble tender branches; and lovely youth, like a flower, has graced her limbs.

*Anasuya.*—Dear Sakuntala, here is Navamalika, styled Vanajyotsna by you, the self-elected bride of Sahakâra. You have forgotten her.

*Sakuntala.*—Then I should forget even myself. (*Advancing towards and looking at the creeper.*) At a charming season

indeed, has the union between this pair (the Navamalika creeper and the Sahakara tree) taken place; for, the Vanajyotsna displays its usefulness by its fresh blossoms and the Sahakara is fit for enjoyment, by reason of its newly formed young shoots. (*Stands gazing*).

*Priyamvada.*—Anasuya, do you know why Sakuntala looks so intently at Vanajyotsna.

*Anasuya.*—Indeed, I do not know it. Please tell me the same.

*Priyamvada.*—As the Vanajyotsna is united to a suitable tree, so she too desires to obtain a husband worthy of her.

*Sakuntala.*—This is certainly a desire of your own. (*Empties the jar.*)

*King.*—Can this lady be possibly sprung from a wife dissimilar in class to that of the father of the family? But away with doubt! She is undoubtedly fit for marriage with a Kshatriya, since my noble heart has conceived a longing for her; for, in matters of doubt the secret prompting of the hearts of good men are authoritative guides. Nevertheless I will properly ascertain about her.

*Sakuntala.*—(*In a flurry*) Alas! A bee rising through the disturbance caused by the sprinkling of water has left the Navamalika and begins to sit on my face.

(*Expresses the trouble caused by the bee.*)

*King.*—(*Gazing at her ardently.*) Good! even her repulse is charming. In whatever direction the bee turns towards her, in that direction she darts her rolling eyes, bending her brows through fear; she is (as it were) now learning the coquettish movements of the eye, even though she is as yet uninfluenced by love (*In a tone of envy.*) Thou touchest repeatedly her tremulous sight with its quivering eye-corners; passing close to her ear, thou art softly humming as if holding a private talk; and while she waves her hands, thou sippest her lower lip containing the essence of love. Thou, O bee! art certainly fortunate, while we, on

account of our having to ascertain the reality (of her origin,) are undone.

*Sakuntala.*—This wicked insect would not cease. I will go to another place. (*Standing at another step and casting the eye*). How, even here it comes. Friends, defend me (who am) being attacked by this ill-behaved wicked bee.

*Priyamvada and Anasuya.*—(*Smiling*). What are we to rescue you? Call for Dushyanta's aid; penance-groves are indeed under the protection of kings.

*King.*—This is a fit opportunity to disclose myself. Fear not, fear not. (*With this half-uttered to himself*). But my royal character would be recognised. No matter, I shall now say thus.

*Sakuntala.*—(*Standing at another place and casting her eye*). What! It follows me even here.

*King.*—(*Hastily moving forward*). Who is that that acts immodestly towards the gentle maidens of the hermits, while a descendant of Puru, the chastiser of the ill-behaved, is governing the earth?

(*On beholding the king all look somewhat bewildered.*).

*Anasuya.*—Good Sir, there is no great danger. This our dear friend, was frightened, being attacked by a bee.

(*Points to Sakuntala.*)

*King.*—(*Turning to Sakuntala*). I trust your devotions prosper.

(*Sakuntala stands speechless through awe.*)

*Anasuya.*—Now (indeed it does prosper) by the acquisition of a distinguished guest. Dear Sakuntala, go to the hermitage and bring an offering of flowers and fruits. This (the water here) will serve as water for the feet.

*King.*—The rite of hospitality has been already performed by your courteous speech.

*Priyamvada.*—So then, let your honour refresh yourself by sitting a while on the raised ground beneath the Saptha-parna tree which is cool by reason of the thick shade,

*King.*—You too must have been tired by this deed. So please sit a while

*Anasaya.*—Dear Sakuntala, it is proper for us to do honour to guests ; so we will sit here.

(*All sit down in their due places.*)

*Sakuntala.*—(*To herself.*) How can it be that having seen this person I have become susceptible of an emotion, scarcely consistent with a penance-grove?

*King.*—(*Gazing at them all*) Your friendship is a delightful one by reason of similar age and form.

*Priyamvada.*—(*Aside*) Anasuya, who can this person of a sweet dignified form be, who talks so pleasantly and sensibly and appears as if endowed with majesty?

*Anasuya.*—(*Aside*). Friend, I also have that curiosity ; let me therefore ask him. (*Aloud*). The confidence raised by your honour's courteous words urges me to speak. What royal family is adorned by your honour? What country is left by you with its people pining by your separation? And on what account has your person, though so very delicate, been caused to undergo the toil of visiting the penance-grove?

*Sakuntala.*—(*To herself*). Oh! Heart, be not uneasy ; this Anasuya is enquiring about everything that you have been thinking of.

*King.*—(*To himself*). How shall I now reveal myself or hide my real character? Well, I will answer her thus *Aloud*). Lady, I, that very person appointed by his majesty, the descendant of Puru, for the supervision of justice, have come to this sacred grove for the purpose of ascertaining whether the rites (of the hermits) are free from obstacles.

*Anasuya.*—Those who perform religious duties are now possessed of a guardian. (*Sakuntala manifests abashment caused by the sentiment of love.*)

*The friends.*—(*Perceiving the gestures of both*). Dear Sakuntala if your father were present here at this moment

*Sakuntala.*—(*Angrily*). What would then happen ?

*The friends.*—He would make this distinguished guest gratified by means of that which is, as it were, the substance of his life.

*Sakuntala.*—Away with you! You speak, having construed something in your own heart. I will not listen to you both.

*King.*—I shall also ask you something about your friend.

*The friends.*—Honoured Sir, this request is asmuchas a favour.

*King.*—The venerable Kasyapa lives in the constant practice of devotion. How then can this, your friend, be said to be his daughter ?

*Anasuya.*—Let your Honour hear. There is an illustrious sage of royal descent (Visvamitra) whose family name is Kausika.

*King.*—The revered one is well-known.

*Anasuya.*—Know him to be the father of our dear friend. Father Kanva is her father by reason of his having brought her up ever since she was deserted by Kausika.

*King.*—My curiosity has been excited by the word '*deserted.*' I like to hear from the beginning.

*Anasuya.*—May your Honour hear. Once upon a time, while that royal saint was engaged in severe austerities, the gods, becoming apprehensive of something, sent a lovely nymph, Menaka by name, to cause disturbance to his devotions.

*King.*—The gods do possess such dread for others' practices of penance. What then ?

*Anasuya.*—Then at the time of the setting in of spring, having looked upon her bewitching beauty (*Stops short through bashfulness*).

*King.*—I understand what happened afterwards. So, then she is the offspring of a nymph.

*Anasuya.*—Exactly so.

*King.*—It is fitting (that she should be the daughter of an *Apsaras*). How else could there be the birth of such a form among mortal females! The tremulously radiant flash does not dart from the earth's surface.

(*Sakuntala remains with downcast eyes*).

*King.*—(*To himself*) My desire has found scope. Nevertheless, having heard of the choice of a suitable match, as expressed in jest by her friend, my mind has been distracted through a feeling of indecision.

*Priyamvada.*—(*Looking with a smile at Sakuntala and then turning towards the king, the hero of the poem*). Your Honour appears to have a desire of saying something further. (*Sakuntala makes a chiding gesture to her friend with her finger.*

*King.*—You have rightly guessed. From an eagerness to hear the history of the good, there is still something to be asked by me.

*Priyamvada.*—Enough of deliberating. Persons who lead the life of a hermit may surely be questioned unreservedly.

*King.*—I wish to know (more) about your friend. Is this monastic vow which impedes the operation of the god of love to be observed by her until the time of her being given in marriage, or else is she ever to dwell in the company of the female deer, dear to her on account of their having fascinating eyes?

*Priyamvada.*—Sir, even in the performance of religious duties, this person is under the control of another. Nevertheless, her father intends to give her away to a husband suited to her.

*King.*—(*To himself.*) This hope is not difficult of realization. Be hopeful, O heart! for, there has now been the complete ascertainment of the doubt. That which thou suspectest to be fire, is a precious gem that may be touched.

*Sakuntala.*—(*Pretending anger*). Anasuya, I am going.

*Anasuya*.—Why?

*Sakuntala*.—I will tell the venerable Gautami about Priyamvada who is talking nonsense.

*Anasuya*.—It is not proper, my dear friend, for one who dwells in a hermitage to go away at random, leaving a distinguished guest, to whom reception has not yet been given.

(*Sakuntala moves off without saying anything*.)

*King*.—(*To himself*.) Ah! How does she go? (*Wishing to seize her, but restraining himself*.) The state of mind of a lover has no counterpart in his actions; for, being about to follow the hermit's daughter, I have been suddenly prevented from starting by my sense of decorum. I have, as it were, gone and come back, though I did not stir from my place.

*Priyamvada*.—(*Stopping Sakuntala*.) Friend, it is not proper for you to go.

*Sakuntala*.—(*With a frown*.) For what reason?

*Priyamvada*.—You owe me the watering of two trees: Come then, You may go after having rid yourself (of the debt.) (*Thus forcibly turns her*.)

*King*.—Good lady, I find her ladyship fatigued by the very duty of watering the trees; for, her arms have the shoulders drooping and the lower part excessively red on account of lifting the water-pot. Even now, an excessively strong breathing causes a heaving of her breast; on her face has formed a collection of drops of perspiration which obstructs the play of the Sirisha flower on her ear; and the tie of the hair being unloosed, her dishevelled locks are held together by one of her hands. I will, therefore, make her rid of her debt. (*Desires to give his ring. Both reading the letters on the signet ring, look at each other*).

*King*.—Do not consider me to be different (from what I am). This is only what belongs to the King (or this ring is only a royal gift):

